कादिप्रायश्चित्तं पूर्वपक्षे। सिद्धान्ते त्वविज्ञातमपि। तथा, यज्ञस्याग्नीदहृच्चमग्नीयेत्यादि यज्ञपदोपेतमन्त्रे अविकृतः प्रयोगः पूर्वपक्षे। संस्थायामस्य लोपात्। सिद्धान्ते तु यज्ञस्य संस्थायास्याग्नीरित्येव मूहितव्यम्, इत्याद्यपि द्रष्टव्यम् ॥२॥१०२॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां

तृतीयाध्यायस्य षष्ठः पादः॥

---

## अथ सप्तमः पादः।



प्रकरणाविशेषात् ॥ दर्शपूर्णमासयोर्वेदिबर्हिषी तद्धर्माश्च खननलवनादयः किमङ्गप्रधानसाधारणहविरासादनार्था उत प्रधानाङ्गभूतहविरासादनमात्रार्था इति विचारे। वेद्यां हवींष्यासादयति बर्हिषि हवींष्यासादयतीति वचनेन वेदिबर्हिरासादनस्य हविरुद्देशेन विधानादर्थात्तयोरपि हविरर्थत्वप्रतीतेर्हविः स्वरूपे चानर्थक्यप्रसक्तौ अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकजिज्ञासायां अप्रतिबद्धफलवत्प्रधानाधिकाराख्यप्रकरणस्यैव तात्पर्यग्राहकत्वावसायात्तेन चाङ्गत्वसम्बन्धस्यैव शाब्दस्य लक्षणाघटकतया श्रवणात् प्रधानापूर्वाङ्गभूतहविरर्थत्वमेवेति प्राप्ते।

प्रकरणेन वाक्यसङ्कोचे प्रमाणाभावादानर्थक्यपरिहारार्थं यथा प्रधानप्रकरणेन तात्पर्यग्रहस्तथा दुर्बलेनापि अङ्गाधिकाराख्यतत्प्रकरणेनापि। अत एवानारभ्याधीताङ्गानुष्ठानसादेश्यस्यापि तात्पर्यग्राहकत्वमुक्तम्। तेन सर्वार्था एवेते। अस्तु वा प्रधानप्रकरणस्यैव तत्। तथापि नाङ्गत्वं सम्बन्धघटकं, गौरवात्। अपि तूपकारकत्वमात्रं, अभ्युदितेष्ट्यां दधिपयसोरिव। सम्बन्धमात्रं वा स्वर्गादिवदगम्यत्यच। अतश्च प्रधानापूर्वोपकारकहविरर्थत्वमात्रावगते रङ्गतदङ्ग हविषामपि अनारभ्याधीतानां प्राकरणिकानां वा प्रधानोपकारकत्वाविशेषात् सर्वार्थत्वम् ॥३॥१०४॥

फलसंयोगात्तु ॥ दर्शपूर्णमासयोर्ज्योतिष्टोमादौ केशश्मश्रुवपनादयः तावत् क्रतुयुक्तपुरुषसंस्कारार्थां न त्वारादुपकारकाः। केशश्मश्रु वपते, नखानि निकृन्तते, दतोधावते, स्नाति, ऽभ्यङ्क्ते इत्यादावात्मनेपदनिर्देशेन पुरुषार्थत्वावगमात्। क्रियाफलस्य ह्यात्मगामित्वे आत्मनेपदम्। आरादुपकारकत्वे तु तत्फलस्य क्रतुसाद्गुण्यस्य क्रतुगतत्वेन नात्मगामित्वम्। यत्त्ववान्तरादृष्टं, न तत् क्रियाफलम्।

यद्यपि स्नाती अस्नू च धातुः परस्मैपद्येव, तथापि छन्दस्यात्मनेपददर्शनात्तस्य च सार्थकत्वे सम्भवति साधुत्वार्थत्वस्यान्याय्यत्वात्स्वरितेत्यादिविधेरेवानित्यत्वं परिकल्प्यात्मगामिक्रियाफलत्वाङ्गीकारो न दोषाय। एवं दतोधावत इत्यादौ। दन्तानां द्वितीययाऽपि संस्कार्य्यत्वावगमः। पयोव्रतं ब्राह्मणस्येत्यादौ षष्ठ्या। स्नानस्य तु मलापकर्षणार्थत्वलिङ्गात्। एवं तपसोऽपि वक्ष्यते। अन्ततो यच न किञ्चिद्गमकं, तच दीक्षासमाख्यैव तथा। यमादिपरिग्रहानुकूलपुरुषसंस्कारवाचित्वात्। पुरुषस्य च क्रतूपयोगित्वं कर्त्तृतया क्रतुजन्यफलभोक्तृतया च। तदिह संस्काराः किं कर्त्तृत्वांशोपयोगिन उत भोक्तृत्वांशोपयोगिन इति चिन्तायाम्।

भोक्तृत्वार्थत्वे समप्राधान्यापत्तेः प्रकरणावगतक्रतुसम्बन्धबाधापत्तिः। अतः कर्त्तृत्वार्थाः। दन्तधावनादीनां शरीरसंस्कारार्थत्वात्तस्य च परलोकभोग्यफलभोक्तृत्वेऽनुपयोगादपि तथात्वम्। अतश्च कर्त्तुरङ्गप्रधानार्थत्वात् संस्काराणामपि तथात्वमिति प्राप्ते।

कर्त्तृत्वस्य शरीरादिवदेव संस्कारव्यतिरेकेणापि जायमानत्वा-

दैवर्थ्यादृष्टरूपभोक्तृत्वार्थमेव युक्तम्। भोक्तृत्वस्य कर्तृत्वापेक्षया अभ्यर्हितत्वाच्चैवम्। शरीरादीनामपि स्वावच्छेद्यजीवव्यक्तिगतत्वसम्बन्धेन भोक्तृत्वोपयोगित्वमव्याहतम्। न चैवं प्राधान्यापत्तिः, क्षेत्रसंस्काराणां बीजावपनार्थत्वस्येवात्मसंस्काराणामपि क्रतुजन्यफलाधानयोग्यताजननार्थानां क्रत्वङ्गत्वोपपत्तेः। अत एव सर्वैरेव संस्कारैः स्वस्वावान्तरादृष्टद्वारा समुच्चितैः प्रधानफलानुकूलातिशयविशेषो जन्यते। प्रधानफलमेव चात्मन्युत्पद्यते इति तदर्था एव संस्कारा नाङ्गार्थास्तत्फलस्य क्रतुगामित्वात्। यत्र तु दृष्टविधया वचनादेव वा कर्तृत्वोपयोगित्वं, यथा प्राथमिकशुद्ध्यर्थस्नानाचमनादौ हिरण्यमालिनः प्रचरन्तीत्यादौ च बहुवचनात्तत्र कर्तृत्व एवोपयोगादङ्गप्रधानार्थत्वम्। अत एव तादृशस्थले अङ्गविकृतिषु तस्यातिदेशः ॥ ३ ॥ १ ० ५ ॥

चिकीर्षया ॥ सोमे षट्त्रिंशत्प्रक्रमादिपरिमाणां वेदिं विधाय श्रुतं, इयति शक्ष्यामहे, स्वां कर्त्तुमिति। सा वेदिर्यद्यपि देशत्वादङ्गप्रधानार्थतया प्रसज्यते, तथापि दीक्षादक्षिणन्यायेन उक्तवचनात् प्रधानमात्रार्था। कर्त्तुमिति हि तुमुना इच्छार्थकेन चिकीर्षितार्थत्वप्रतीतेः प्रधानस्यैव चिकीर्षितत्वादङ्गानाञ्चाचिकीर्षितानामपि चिकीर्षितप्रधानार्थत्वेनैवानुष्ठानात् प्रधानमात्रार्थैव वेदिः। स्थितन्तावदपर्यवसितम् ॥

तथा प्रधानेन ॥ दर्शपूर्णमासयोस्तत्तुहोता पौर्णमासीमभिमृशेत् पञ्चहोत्रामावास्यामिति श्रुतम्। तत्राप्येतौ मन्त्रौ पौर्णमास्यमावास्यापदवाच्यप्रधानमात्रसंयोगात्तद्विरभिमर्शनार्थाविव। न च

पौर्णमास्यादिशब्दौ कालपरौ तथात्वे द्वितीयया सम्बन्ध्यर्थलक्षणा-नुपपत्तेः। आसन्नानि हवींष्यभिमृशतीति प्राप्ताभिमर्शनानुवादेन मन्त्रकालोभयविधौ वाक्यभेदापत्तेश्च। काले निमित्तेऽभिमर्शनो द्देशेन मन्त्रविधौ प्रतिपदादिकालीनाभिमर्शने मन्त्रानापत्तेश्च। पौर्णमास्यादिपदाभ्यां पौर्णमास्यादिप्रयोगस्याधिकरणत्वविधौ चोभ-यत्र प्रातिपदिके प्रत्यये च लक्षणाप्रसङ्गो वाक्यभेदश्च तदवस्थ एव। प्रयोगस्य निमित्तत्वाङ्गीकारे च लक्षणाद्वयप्रसङ्गो विकृतावप्राप्त्या-पत्तिश्च। अतो लाघवात् प्रातिपदिकेनैव पौर्णमास्यादिप्रधानमात्र-सम्बन्धिहविर्लक्षणात्तदुद्देशेनैव मन्त्रविशिष्टमभिमर्शनं विनियुज्यते। मन्त्रमात्रं वा तदुद्देशेन विधीयते। अभिमर्शनं तु प्रकरणप्राप्तानु-वादः। उत्पत्तिवाक्ये च हविःशब्देन प्रधानमात्रहविरुपादानमुप-संहारविधया न विरुध्यते। अतः प्रधानमात्रार्थौ मन्त्रौ॥

स्थितादुत्तरम्॥ यद्यपि चिकीर्षितार्था वेदिस्तथापि साङ्गस्यैव फलसामग्रीत्वेन चिकीर्षितत्वादङ्गप्रधानार्थैव सा। वस्तुतस्तु। देश-त्वात्तस्याः प्रकरणादेवाङ्गप्रधानार्थत्वसिद्धेरर्थवाद एवायमियति शक्ष्यामह इति। अत एव शक्ष्यामह इति वचनात् कर्तृप्रचारमा-त्रार्थत्वमङ्गीकृत्याङ्गप्रधानार्थत्वमप्यपास्तम्। अतः सर्वार्थायावेदेरग्नी-षोमीयादौ प्राकृतहविरासादनार्थवेदिबाधकत्वं तद्विकृतौ चाति-देशः सिद्धो भवति।

यत्तु दादशे प्राकृतवेदेः प्रसङ्ग इति वक्ष्यते। तत्कर्तृप्रचार-मात्रार्थत्वं कृत्वा चिन्तया। द्वितीयस्योत्तरम्। सत्यं पौर्णमास्यादि-शब्दाभ्यां प्रधानसम्बन्धिहविर्लक्षणा। तथापि सम्बन्धोनाङ्गत्वाख्यः,

तथात्वे वाक्यसङ्कोचापत्तेः। अपि तूपकारकत्वाख्य इत्यङ्गप्रधानार्थावेव मन्त्रौ ॥ २ ॥ १०६ ॥ १०७॥

दीक्षादक्षिणम् ॥ ज्योतिष्टोमे दीक्षा, दण्डेन यजमानं दीक्षयतीत्यादिका, दक्षिणा च गौश्चाश्वश्चेत्यादिका, श्रुता साङ्गप्रधानार्था। दीक्षायास्तावद् द्वितीयया पुरुषसंस्कारिकाया वपनाधिकरणन्यायेन फलिसंस्कारकत्वप्रसक्तावपि यो दीक्षितो यदग्नीषोमीयं पशुमालभते दीक्षितः सोमं क्रीणातीत्यादौ दीक्षितग्रहणान्निसामर्थ्येनेष्टकाः प्रचतीत्यादिवद्विशेषणीभूतदीक्षाया अपि कर्त्तृसंस्कारद्वाराऽग्नीषोमीयाद्यर्थत्वप्रतीतेस्तस्य च स्वतन्त्रविध्यनायकत्वे गौरवादनुवादविधया दण्डेन दीक्षयतीत्यादौ हिरण्यमालिन इति बहुवचनवत्कर्त्तृसंस्कारकतातात्पर्य्यग्राहकत्वावगतेः कर्त्तुरङ्गप्रधानार्थत्वेन दीक्षाया अप्यङ्गप्रधानार्थत्वात्। दक्षिणायास्तु कर्त्त्रानयनार्थत्वादेवाङ्गप्रधानार्थत्वं स्फुटमेव। एवं च दीक्षाः सोमस्य दक्षिणाः सोमस्येति वाक्यद्वयं साक्षात्परम्परासाधारणसम्बन्धसामान्यमादायानुवादः। इतरथा परिसङ्ख्यापत्तेरिति प्राप्ते।

वचनानर्थक्यभिया प्रधानमात्रार्थत्वम्। फलतः परिसङ्ख्यात्वाच्च न त्रैदोष्यापत्तिः। न च वचनस्य प्रधानप्रयुक्तत्वमात्र परत्वेनाप्युपपत्तेरङ्गगत्वनिवृत्तिपरत्वे मानाभावः। प्रसङ्गसिद्धिक्षतिकारकत्वादेर्निराकर्त्तुमशक्यतया वचनस्याङ्गोद्देश्यतामात्रनिवृत्तिफलत्वावसायात्तस्याश्च प्रयुक्तत्व इवाङ्गत्वेऽपि प्रविष्टत्वेनोभयनिवृत्त्युपपत्तेः। प्रयुक्तत्वनिवृत्तौ अङ्गत्वाङ्गीकारे फलाभावाच्च। न च दक्षिणावाक्ये परिसंख्यार्थत्वोपपत्तावपि दण्डेनेत्यादिवाक्येन दीक्षायाः प्रसक्तस्य

प्रधानमात्रार्थत्वस्य यो दीक्षित इत्यादिवाक्येन दीक्षायास्तत्तद्-ङ्गाङ्गताविधायकेन बाधितस्य प्रतिप्रसवार्थता दीक्षाः सोमस्येति वाक्यस्यास्त्विति वाच्यम्। गौरवेणाग्नीषोमीयादिवाक्यस्य दीक्षा-विधायकत्वानुपपत्तेः। अतोऽनुवादविधयैव तद्बाधकत्वाद्युक्तमेव परिसङ्ख्यात्वम्।

वस्तुतस्तु गौरवभियैवानुवादविधयाऽपि न बाधकत्वम्। अपि तु प्रधानाङ्गभूतदीक्षायुक्तपुरुषानुवाद एव य एवं विद्वानिति-वद्दीक्षितपदम्। अतश्च दीक्षावाक्यस्यानुवादकत्वमेव दक्षिणाप्रशंसा-फलम्। अतः प्रधानमात्रार्थमेव दीक्षादक्षिणम्। तथापि तु नाङ्गेषु प्राकृती अन्या वा दक्षिणा। प्रसङ्गेन कार्यसिद्धेर्दशमे वक्ष्यमाणत्वात्। प्रयोजनमग्नीषोमीयादिविकारेषु दीक्षादक्षिणयोरनतिदेशः सि-द्धान्ते। अतश्च तेष्वपेक्षितत्वाच्छतोक्थ्यादिवत्प्रकृतितोऽन्याहार्यदक्षि-णायाः स्वतन्त्रादिदेशः, अर्थाक्षिप्त यत्किञ्चिद्दानतिसाधनं द्रव्यं वा दक्षिणेत्यपि तत्रैव वक्ष्यते ॥ ३ ॥ १०८॥

तथा यूपस्य ॥ दर्शपूर्णमासयोर्होतुरन्तर्वेद्येकः पादो भवति बहिर्वेद्येक इति श्रुतम्। तथा सोमेऽग्नीषोमीययूपमानं, प्रकृत्यार्ध-मन्तर्वेदि मिनोत्यर्धं बहिर्वेदीति। तत्रान्तर्वेदिदेश एव तत्तदङ्गत्वेन विधीयते, उतान्तर्वेदिबहिर्वेदिशब्दलक्षितदेशविशेषो वेति चि-न्तायाम्। प्रमाणाभावादन्तर्वेदिदेश एवैकपादोद्देशेन यूपार्धोद्देशेन च विधीयते। तद्विधौ पादार्धान्तरयोर्बहिर्वेदिदेशः प्राप्त एवा-नूद्यतइति प्राप्ते।

आद्योदाहरणे तावद्धविरासादनार्थायादेक्षिक्यावेदेरेकपादोद्दे-

शेन विधावेकत्वस्योद्देश्यविशेषणस्याविवक्षापत्तेः बहिर्वेद्येक इत्यस्यानु-
वादायोगाद्विधाने वाक्यभेदापत्तेरगत्या देशविशेषलक्षणया होम-
वत्स्थानोद्देशेन विधीयते। न च देशविशेषलक्षणापेक्षया लाघ-
वादन्तर्वेदित्वविशिष्टबहिर्वेदित्वमेव लक्षणया विधीयतामिति वाच्यम्।
विशेष्यविशेषणभावे विनिगमनाविरहात्।

द्वितीयोदाहरणेऽपि सौमिक्यावेदेर्देशत्वेनाङ्गप्रधानार्थत्वस्य स्था-
पितत्वाद्यूपार्धद्वयेऽपि वेदेः प्राप्तत्वादर्धोद्देशेन तद्विधाने परिसङ्ख्या-
पत्तिः। न चाग्नीषोमीयादिरूपाङ्गाङ्गत्वेऽपि वेदेस्तदङ्गभूतयूपमा-
नाङ्गत्वे प्रमाणाभावः। प्रयोगविधिना साङ्गानामेवाङ्गानां प्रयोग-
विधानात्। अन्यथा तदङ्गप्रयाजपशुपुरोडाशादिहविरासादनादौ
वेद्यादेरनापत्तेः। न च वाक्येन वेदेर्यूपार्धाङ्गत्वेन विधानात्
प्रकरणगम्यसर्वार्थत्वस्य बाधोपपत्तेः परिसङ्ख्यात्वानापत्तिः। षट्-
त्रिंशत्प्रक्रमपरिमाणार्थवादस्ये यति शम्यामष्ट इत्यस्यार्धमात्रार्थत्वे-
ऽनुपपद्यमानत्वेन सर्वार्थत्वबाधानुपपत्तेः।

न चैवमपि फलतः परिसङ्ख्यात्वात् चैदोष्यानापप्रापकप्रमाण-
प्रतिबन्धाभावेन शाब्दपरिसङ्ख्यात्वापत्त्या चैदोष्यावश्यकत्वात्। अतो
वरं देशविशेषलक्षणैका। न चार्धोद्देशेन बहिर्वेदिमात्रविधाना-
दर्धान्तरे च वेदेरेव प्राप्तत्वादनुवादोपपत्तेर्न लक्षणाऽपीति वाच्यम्।
अनुवादवैयर्थ्यभियैव लक्षणाङ्गीकारात्। तत्राप्यन्तर्वेदिपद एव
लक्षणाङ्गीकारे बहिर्वेदेरपि विधेयत्वेन वाक्यभेदापत्तेरर्धमन्तर्वेदि
अर्धं बहिर्वेदीति पदैर्लक्षितदेशविशेषविशिष्ट-मानस्यैव यूपोद्देशेन
मानोद्देशेनैव वा विधानम्। तत्प्रयोजनं तु, यूपैकादशिन्यां

वेदेरविवृद्धिः । वस्तुतस्तु देशविशेषलक्षणायामपि सामान्यतः शास्त्रे विहिताया वेदेरविरोधेनार्धे प्राप्त्युपपत्तेर्यूपैकादशिन्यामपि तदर्थं वेदिविवृद्धिरावश्यकी । अतएव यावद्यूपं वेदिमुद्धन्तीति कल्पसूत्रकारवचनमपि सङ्गच्छते । अतोऽन्यत्प्रयोजनं मृग्यं, देशविशेषलक्षणैव वा नाङ्गीकर्त्तव्येति ध्येयम् ॥३॥१०९॥

सामिधेनी ॥ सोमे, उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुरिति श्रुतम् । यत् यत्र दक्षिणहविर्धानेऽभिषवस्तत्राग्नीषोमीयादिसामिधेनीरनुब्रूयादित्यर्थः । तत्र हविर्धानशकटः सामिधेन्यङ्गमुत तल्लक्षितोदेश इति चिन्तायाम् । पूर्ववत्परिसङ्ख्यावाक्यभेदाद्यभावाल्लक्षणापरिहाराय सोमधारणे कृतार्थस्यापि हविर्धानस्यैव पुरोडाशकपालन्यायेन सामिधेन्यङ्गत्वमिति प्राप्ते ।

हविर्धानस्यात्यन्ताप्राप्तस्य सामिधेन्यङ्गत्वेन विधावपूर्वविधित्वापत्तेः प्रकृतित आहवनीयप्रत्यग्देशस्यातिदेशप्राप्तस्यानियमेन दक्षिणोत्तरहविर्धानसमीपवर्त्तितया प्राप्तेर्दक्षिणहविर्धानलक्षितदेशस्य नियमविधौ लाघवमिति तदनुरोधेन लक्षणाऽपि न दोषः ।

वस्तुतस्तु लाघवस्य प्रमाणानुग्राहकत्वान्निषादस्थपत्यधिकरणन्यायेनौत्तरकालिकत्वाच्च तदनुरोधेन लक्षणाऽनुपपत्तेः यद्यत्र देशे सुन्वन्त्यभिषुण्वन्ति तस्मिन्नभिषवदेशे सामिधेनीरनुब्रूयादित्यर्थावगमेन हविर्धानस्याप्रतीतेरभिषवदेशस्यैव श्रौतत्वेन विधेयत्वान्न लक्षणाऽपि । प्रयोजनं, पूर्वपक्षे हविर्धानोपरि सामिधेनीपाठः । सिद्धान्तेऽभिषवदेशे दक्षिणहविर्धानसमीपे ॥३॥११०॥

शास्त्रफलम् ॥ तदेवं पूर्वैः सह प्रकरणस्थानयोर्विरोधाविरोध-

विचारे समाप्तेऽधुना समाख्यायास्तं कर्त्तुं प्रथमं तावत्स्वाम्यतिरिक्त-कर्त्तृसद्भावः प्रतिसमाध्यते।

अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिषु दक्षिणायुक्तेषु कर्मसु यद्यपि तावत्स्वर्गकामो यजेतेति सामानाधिकरण्यात्साक्षाया अपि यागादिकरणिकायाभावनायाः स्वर्गकामकर्त्तृत्वं प्रतीयते, तथापि कर्त्तृत्वस्य स्वतन्त्रः कर्त्ता तत्प्रयोजकोहेतुश्चेति सूत्रद्वयानुसारात् षड्भिर्हलैः कृषतीति प्रयोगाच्च साक्षात्प्रयोजकसाधारण्येनैवावग-तेरसति प्रमाणान्तरे प्रयोजककर्त्तृत्वायोगेऽपि प्रकृते दक्षि-णाऽऽम्नानादिना प्रयोजककर्त्तृत्वस्याप्यवगतेः स्वाम्यतिरिक्तस्यापि कर्त्तृत्वम्।

कर्मकरानतिसाधनवचनो हि दक्षिणाशब्दोनासत्सु कर्त्रन्तरेषू-पपद्यते। न ह्यत्रास्ति किञ्चिद्बलवद्बाधकं येन यदि पत्नीः संयाजयन् कपालमभिजुहुयाद्वैश्वानरं द्वादशकपालं निर्वपेत्तस्यैकहायनोगौर्द-क्षिणा तं स देव्याय दद्यादित्यत्र द्रव्यस्य ऋत्विक्प्रतिषेधादिवा-दृष्टार्थत्वं लक्षणया कल्प्येत। सामानाधिकरण्यस्य प्रयोजककर्त्तृत्वेना-प्युपपत्तेः। आत्मनेपदस्यापि च साक्षात्प्रयोजकसाधारण्येनाकर्त्तरि फलप्रतिषेधकत्वेनैवोपपत्तेर्न फल्यतिरिक्तस्य कर्त्तृत्वप्रतिषेधकत्वम्।

अत एव यजन्ति याजका इति परस्मैपदप्रयोगः। तेन कस्यापि बाधकस्याभावान्न दक्षिणादानस्यादृष्टार्थत्वकल्पना। अतस्तद्बलाद्दर्श-पूर्णमासयोश्चत्वार ऋत्विज इति वचनाद्धौत्रादिसमाख्यावरणाद्या-म्नानबलाच्च स्वाम्यतिरिक्ता अपि कर्त्तारः। न च स्वामिनोऽशक्तौ दक्षिणादानादिनाऽन्योपादानम्। दक्षिणादेर्नित्यवदाम्नानविरो-

धात्। अतः परकीयस्वत्वस्य परेणोत्स्रष्टुमशक्यत्वादुत्सर्गमात्रं स्वामिना कार्यम्। अन्यत्तु विशेषतः प्रमाणाभावेऽन्येनैवेति सिद्धम्॥२॥११॥

तत्रार्थात्॥ ते कियन्त इत्यपेक्षायां तत्तत्कर्मणि अध्वर्य्वादिसंज्ञापुरस्कारेण तत्तत्कर्मविधानाद्यावंतां यत्र विधानन्तावन्त एव तत्र ज्ञेयाः। अत एवाग्निहोत्रे एक एवाध्वर्युः, दर्शपूर्णमासयोश्चत्वारः, चातुर्मास्येषु पञ्च, पशौ षट्, सोमे सप्तविंशतिः।

न च परिक्रयवशादेकोपादानावश्यम्भावे तस्यैव पाचकलावकादिवत्तत्तत्कर्मकरणनिमित्तावह्वाः संज्ञाभविष्यन्तीति वाच्यम्। सञ्ज्ञानां कर्मकरणात् पूर्वमेवाध्वर्युं वृणीत इत्यादिना पूर्वप्रयुक्तत्वेन कर्मकरणनिमित्तकत्वाभावात्। अपि तु तत्तद्वरणनिमित्तकत्वं तत्तद्वरणजन्यतत्तद्दानतिनिमित्तकत्वं उक्तविधानतिजन्याध्यवसायनिमित्तकत्वं वा। कृतेऽपि वरणे अहमध्वर्युः स्यामित्यध्यवसायाभावे अध्वर्युशब्दाप्रयोगात्।

वस्तुतस्तु अध्यवसायस्यापि निश्चयरूपस्य क्षणिकत्वात्तज्जन्योऽभिमानविशेष एव निमित्तम्। तस्य च सत्रे स्वत एवागतत्वेन वरणाभावेऽपि दृष्टत्वात एव सत्त्वादध्वर्युत्वाद्युपपत्तिः। प्रकृतावपि होता अवृतः सामिधेनीरन्वाहेति वरणात्पूर्वं होतृशब्दप्रयोगोपपत्तिः। अत एव वरणजन्यादृष्टवत्त्वमध्वर्युत्वादिकमिति प्राभाकरमतमपास्तम्। सत्रेऽपि ऋतुयाज्यावरणवत् वरणापत्तेश्च।

न चैवमप्येकस्यैव तत्तदभिमानोपपत्तेः कर्तृभेदे प्रमाणाभावः। अध्वर्युं वृणीते ब्रह्माणं वृणीत इति तत्तद्विधिविहितवरणानाम-

भ्यासेन भिन्नानां संस्कार्यभेदं विनाऽनुपपत्तेः । अप्रवृत्तस्य पुरुषस्य प्रवर्त्तनफलकमभ्यर्थनं हि वरणम् । न च तदेकस्मिन् पुरुषे अनेकं सम्भवति । भिन्नानां संस्कार्याणां तत्तत्क्रियासु भिन्नास्वेव विनियोगान्न विकल्पाशङ्का । दर्शपूर्णमासयोश्चत्वार ऋत्विज इत्याद्यनुवादवशादप्येवम् ।

एवं च ऋत्विजोऽवृणीत इत्यपि न वरणविधिस्तथात्वे ऋत्विज इति बहुत्वानुवादानुपपत्तेः । अपि तु ऋत्विक्संस्कारकवरणमात्रानुवादो ऋत्विग्धर्माणां तदुत्तरत्वप्राप्त्यर्थस्तद्धर्मविधानार्थश्च । अतो यावन्ति लौकिकानि यावन्ति मन्त्रवन्ति वा वरणानि, तावन्तः कर्त्तार इति सिद्धम् ॥२॥११२॥

चमसाध्वर्यवश्च ॥ अध्वर्य्यादिसञ्ज्ञानां रूढत्वादस्तु भेदकत्वम् । चमसाध्वर्युसञ्ज्ञायास्तु चमसेष्वध्वर्युरित्येवं यौगिकत्वादध्वर्युपुरुषाद्य एवेत इति प्राप्ते । सत्यपि सञ्ज्ञाया यौगिकत्वे चमसाध्वर्यून् वृणीत इति पृथग्वरणाम्नानादवरीतव्यानां चमसाध्वर्यूणां पूर्ववदेवान्यत्वम् । एवं सदस्यं वृणीत इति वचनात्सदस्यस्यापि । एवं च मध्यतः कारिणां चमसाध्वर्यवो होत्रकाणां चमसाध्वर्यव इति ऋत्विक्सम्बन्धव्यपदेशोऽपि भेद एवोपपद्यते ॥२॥११३॥

उत्पत्तौ ॥ ते चमसाध्वर्यवोवरणवाक्ये बहुत्वश्रुतेर्बहवः । यद्यपि तत्रोद्देश्यविशेषणत्वाद्बहुत्वाविवक्षा । तथापि स्वाध्यायोऽध्येतव्य इति वत्संस्कारविध्यन्यथाऽनुपपत्त्या विनियोगकल्पनदशायान्तद्विवक्षोपपत्तिः । अनयैव दिशा पुरोहितं वृणीते अध्वर्युं वृणीतइत्यादावप्येकत्वविवक्षा द्रष्टव्या । वस्तुतस्तु तत्र तत्र विनियोगे चम-

साध्वर्य्यवश्चमसानुन्नयन्ति अध्वर्युः पुरोविभजते इत्यादौ बहुत्वैकत्वश्रुतेस्तद्विवक्षोपपत्तिः ॥३॥११४॥

दशत्वम् ॥ ते च दशैकादश वा। न तु त्रयः। चमसानाम्नातत्वात्। अत एव मध्यतः कारिणां होत्रादीनां चतुर्णां होत्रकाणां च मैत्रावरुणादीनां षण्णां चमसाध्वर्य्यव इति व्यपदेशोऽपि सङ्गच्छते। सदस्यपक्षे तच्चमसे एकादशः। एवं च दशपेये क्रतौ सिद्धवद्दश चमसाध्वर्य्यव इति व्यपदेशोऽपि सदस्याभावपक्षे सङ्गच्छते। त्रित्वपक्षे न कथञ्चिद्दशोपपत्तिः ॥३॥११५॥

शमिता च ॥ पशौ शमितारमुपनयीतेति श्रुतः। शमिता वरणभेदानाम्नानात्सत्यपि सञ्ज्ञाभेदे यौगिकत्वेन प्रकृतेष्वेव ऋत्विक्षु अनृत्विक्षु वा तेषु तस्या उपपत्तेर्नान्यः। तत्राप्यध्वर्य्योः पराङावर्त्ततेऽध्वर्युः पशोः सञ्ज्ञप्यमानादिति वचनेनासामर्थ्यात्तत्पुरुषः प्रतिप्रस्थाता सञ्ज्ञपयेत्। न च तस्य हिंसादोषभिया अप्रवृत्तिः। दक्षिणादिलोभेन तदङ्गीकारेण प्रवृत्त्युपपत्तेः। अत एवार्त्विज्यं निन्दति। ब्राह्मणस्य च शामित्रविषये कल्पौ पृथङ् निषेधोदोषाधिक्यख्यापनार्थः। अत एव कल्पौ शामित्रे ब्राह्मणालाभेन शूद्रेण क्रियमाणे होमाङ्गं शमितुस्तद्ब्राह्मणाय दद्याद्यद्यब्राह्मणः स्यादिति वचनं सङ्गच्छत एव। अब्राह्मणः स्यादिति यजमानपरमिति तु प्राञ्चः ॥३॥११६॥

उपगातारश्च ॥ एवं सोमे समाम्नाता उपगातारोऽपि वृतेष्वेव। न चोपगातॄणां कर्म्मगुणत्वेन लोके प्रसिद्धेर्वृतानां च तुल्यकक्षत्वेन तदभावादन्य इति वाच्यम्। तुल्यानामपि प्रैषप्रैषार्थकारित्ववत्पर-

स्वरोपकारित्वस्यैवोचितत्वात्। स्वामिपरिक्रीतानामपि शिल्पकारिणां तथा दर्शनाच्च। तत्राप्युपगानस्य सामवैदिकत्वादुद्गात्रादीनां चयाणाङ्गानव्यावृत्तत्वेऽपि* सुब्रह्मण्यो नियतः। अन्ये तु अवरा-उपगायन्ति चत्वार उपगायन्तीति वचनान्तरानुसारादनियताः। अत एव नाध्वर्युरुपगायेदिति वचनान्नासौ ॥३॥१ १ ७॥

विक्रयी ॥ सोमविक्रयी त्वन्य एव। वरणादिकं हि क्रत्वर्थत्वात्तदङ्गपदार्थकरणाय पुरुषानुपादातुं क्रियते। विक्रयस्त्वविहितः क्रयान्यथानुपपत्त्या आवश्यकोऽपि दोषस्वीकारेण रागतः प्रवृत्तपुरुषकर्तृकविक्रयोपजीवनेनापि क्रयसिद्धेरनाक्षेपाच्चानङ्गम्। अतस्तत्र प्रवृत्तानामप्राप्तेरन्य एवेति ॥३॥१ १ ८॥

कर्मकार्यात् ॥ ब्रह्मादयस्समसाध्वर्यवस्य सोमे कर्त्तारः समधिगतास्ते सर्वे ऋत्विक्पदवाच्याः। ऋत्विक्पदस्य ऋत्विग् दधृगित्यादिस्मृत्या कर्तृवाचिक्विन्नन्तत्वनिपातनेन यौगिकत्वावगतेर्वसन्ताख्यऋतुकालीनयागप्रयोगकर्तृवाचित्वनिर्णयोनादृष्टरूपऋत्विक्त्वे रूढिमङ्गीकृत्यौणादिकत्वकल्पनाऽनुपपत्तेः। तस्य च सर्वपुरुषेष्वविशेषात्। तस्यैतस्य यज्ञक्रतोः सप्तदश ऋत्विज इति तु एकं वृणीत इत्यादिवदवयुत्यानुवादः। इतरथा परिसङ्ख्यायां त्रिदोषत्वापत्तेः। अदृष्टरूपऋत्विक्त्वकल्पनायां गौरवादेव वरणमेव तज्जन्यादृष्टमेव वा ऋत्विक्पदप्रवृत्तिनिमित्तमित्यप्यपास्तम्। रूढिकल्पनायां प्रमाणाभावात्। ब्रह्मादिवरणानां भेदादनेकादृष्टशक्तिकल्पनापत्तेश्च। व्यापकधर्मस्य वरणत्वस्यैव शक्यत्वाङ्गीकारे तु अतिप्रसङ्ग इत्यस्मन्मत-

* व्यावृत्तत्वेऽपि,— इति भवितुमुचितम्।

प्रवेशः। यजमाने वरणाभावेन ऋत्विक्त्वानापत्तेश्च। सत्रे ऋत्विक्त्वसम्पत्तये वरणापत्तेश्च। अत एव 'ऋत्विजोवृणीत इत्यस्यैव वरणविधित्वादेकमेव वरणं पदप्रवृत्तिनिमित्तमित्यपास्तम्। ब्रह्माणं वृणीत इत्यादिविधीनां वैयर्थ्यप्रसङ्गाच्च। एतेन ब्रह्मादिनिष्ठक्रतुयजनान्येव ऋत्विक्पदप्रवृत्तिनिमित्तमित्यपास्तम्। अनेकशक्तिकल्पनातादवस्थ्यात्। अतश्च सर्व एव ऋत्विक्पदवाच्या इति सर्वेषामेव हिरण्यमालित्वादि ऋत्विक्कार्यमिति प्राप्ते।

सत्यं, ऋत्विक्पदं यौगिकम्। ऋतुयजनसामान्यवाची च सः। तथापि सप्तदशश्रुत्या उद्भित्पङ्कजादिवदेव रूढिमकल्पयित्वैव सप्तदशश्रुत्युन्नीतप्राचीनप्रयोगस्य सहकारित्वकल्पनयैव सप्तदशानामेव ऋत्विक्पदशक्यत्वोपपत्तिः। न ह्युद्भिदादिपदेषु अतिप्रसङ्गनिराकरणार्थं रूढिकल्पनम्। तथात्वे सोमादिवन्मत्वर्थलक्षणामङ्गीकृत्य गुणविधित्वस्यैवोपपत्तेः। न चैवं सप्तदशश्रुतेः परिसङ्ख्यात्वापत्त्या त्रिदोषत्वापत्तिः। ऋत्विक्पदन्यानकारणताकल्पनवेलायामेव* सप्तदशश्रुतेस्तात्पर्यग्राहकत्वकल्पनेन प्राप्तपरिसङ्ख्यात्वाभावात्। अतश्च सप्तदशानामेव ऋत्विक्कार्यं हिरण्यमालित्वादि ॥३॥११९॥

नियमः॥ के ते सप्तदशेत्यपेक्षायां ऋत्विग्भ्यो दक्षिणां ददातीत्युपक्रम्याग्नीधे ब्रह्मण उद्गात्रे इत्यादीनां षोडशानामेव सङ्कीर्त्तनात्तेषामेव ऋत्विक्त्वम्। अत एव सत्रे यजमानानामेव ऋत्विक्त्वात्तेषामेव यजमानसहितानां दीक्षाश्रवणम्। अतः षोडश तावत्समधिगताः ॥३॥१२०॥

---

* इत्थमेव पाठः सर्व्वत्र।

स्वामिसप्तदशाः ॥ सप्तदशस्तु सदस्यः। तस्यापि पृथग्वरणाम्ना-नाच्च समविधानाच्चेति प्राप्ते। सदस्यकर्त्तव्यपदार्थाश्रवणाद्वरणस्य सक्तुन्यायेन विनियोगभङ्गं कल्पयित्वा दृष्टार्थत्वावगतेः सदस्यस्य पाक्षिकत्वेन सप्तदशश्रुतेः पाक्षिकानुवादत्वात्पक्षे तस्य दीक्षाम्नानाच्च स्वाम्येव सप्तदशः। कर्मकरत्वेऽपि वा न पत्नी। सप्तदशत्वजनकी-भूतापेक्षाबुद्धौ लिङ्गवैरूप्याङ्गीकारे प्रमाणाभावात् ॥३॥१२१॥

ते सर्वार्थाः ॥ तत्तत्क्रतुषु प्रमितानां तेषां कर्त्तृणामव्यवस्थयैवा-सति विशेषविधौ लिङ्गप्रकरणाभ्यां तत्तत्पदार्थकर्त्तृत्वं, न तु तयोर्दुर्ब-लतया आध्वर्यवादिसमाख्यया सङ्कोचः ॥ स्थितं तावदपर्यवसितम् ॥

अग्नयस्त्र ॥ आहवनीयादयोऽनारभ्याधीतवचनैर्होमाद्यनुवादेन विहिताः पर्णतान्यायेन प्रकृतिहोमाद्यर्था एव विकृतौ हि ये तावद्धोमादयोऽतिदेशेन प्राप्यन्ते, तेषु प्राप्तिकालवैषम्यात् स्पष्टमेव द्विरुक्तत्वम्। येऽप्यामनहोमादयोऽपूर्वास्तेषामपि विकृतिसम्बन्धबो-धव्यतिरेकेणाङ्गग्राहकत्वानुपपत्तेर्विकृतेश्च क्लृप्तोपकाराङ्गग्रहणार्थं पूर्व-मतिदेशकल्पनाऽवश्यम्भावात्तस्य च प्रकृतावाहवनीयप्राप्तिमन्तरेणानु-पपत्तेस्तेष्वपि द्विरुक्तत्वम्। अतस्तेषु नोपदेशेन नापि यूपावटस्तरण-बर्हिर्वदतिदेशेनाहवनीयप्राप्तिः। अतोऽधिकरणं विनैव तद्वति प्राप्ते।

सत्यमतिदेशप्राप्तेषु नाहवनीयाद्युपदेशः। अपूर्वेषु त्वस्यानारभ्या-धीतत्वादतिदेशेन प्राप्तिरविरुद्धा। न ह्यामनहोमानां विकृति-सम्बन्धं विना नाङ्गग्राहकत्वम्। उत्पत्तिवाक्ये दृष्टसामान्यस्य भाव्य-त्वबोधेनापि शाब्दबोधस्य पर्यवसन्नतया तदनुवादेनाहवनीयविधा-नोपपत्तेः। अतस्तेऽपि सर्वार्थाः ॥३॥१२२॥

स्थितादुत्तरम् ॥ नात्र समाख्यया लिङ्गप्रकरणयोर्बाधः। किन्तु ताभ्यामव्यवस्थया प्राप्तानां कर्तॄणां 'व्यवस्थामात्रमपेक्षितं क्रियते। अतश्च हौत्रसमाख्याताः पदार्था होत्रा कर्त्तव्या आध्वर्यवसमाख्याताश्चाध्वर्युणा औद्गात्रसमाख्याता उद्गात्रा। सर्वेषु हि ऋग्वेदयजुर्वेदसामवेदेषु ये पदार्था विहिताः तेषामेताः क्रमेण समाख्या याज्ञिकानां प्रसिद्धाः। यौगिकाश्चैते शब्दा न पदार्थानामध्वर्य्वादिसम्बन्धव्यतिरेकेण सम्भवन्तीति तेषु तेषां योग्यत्वात्कर्त्तृत्वसिद्धिः ॥ ३॥१२३॥

तस्योपदेश ॥ अयं चोत्सर्गो वचनाद्यजमानस्य याज्येत्यादिकाद्विशेषसमाख्यया च पोत्रीयं नेष्ट्रीयं याजमानमित्यादिकया अपोद्यते। न चैवं तादृशविषये सामान्यसमाख्याया निर्विषयत्वापत्त्या आनर्थक्यप्रतिहतन्यायेन विकल्पापत्तिः। यथाशक्ति प्रयोगे पोत्रादीनामशक्तौ सविषयत्वोपपत्तेः। वस्तुतस्तु हौत्रादिसमाख्यायाः सामानाधिकरण्यसम्बन्धेन ऋग्वेदविहितकर्मत्वमुपलक्षणीकृत्यैव तत्तत्पदार्थेषु होत्रादिविधायकत्वं निरुक्तसम्बन्धेनाग्नीषोमीयप्राक्कालवृत्तित्वमुपलक्षणीकृत्योपांशुत्वविधायकत्वमिव यत्किञ्चित् प्राचीनमित्यस्य। अतश्च तद्वदेव केषु चित्पदार्थेषु तदभावेऽपि न क्षतिः। अत एव दक्षिणारहितकाम्यादौ यजमानस्यैव कर्त्तृत्वेऽपि समाख्यायां न काचिदनुपपत्तिः ॥ ३॥१२४॥

प्रैषानुवचनम् ॥ ज्योतिष्टोमे मैत्रावरुणः प्रेष्यति चानु चाहेति श्रुतम्। सन्ति च तत्र केचित् केवलाः प्रैषाः, अग्नये समिध्यमानायानुब्रूहि यूपायाज्यमानायानुब्रूहीत्यादयः। केवलानि चानुवच-

मानि, प्रवोवाजा अभिद्यवः अञ्जन्ति त्वामध्वर इत्यादीनि उप-देशातिदेशप्राप्तानि। प्रैषोत्तरत्वाच्चैषामनुवचनत्वम्। कानिचित्तु प्रैषत्वे सत्येवानुवचनानि, यथा होता यचदित्यादीनि। एषां च प्रेष्येत्यध्वर्युप्रैषोत्तरभावित्वाद्धोतर्यजेत्यन्तं प्रैषत्वाच्चोभयरूपत्वम्।

तदिह मैत्रावरुणः प्रैषानुवचनोद्देशेन विधीयमानः सर्वत्र स्यान्न तु प्रैषान्तानुवचनेष्वेव। उद्देश्यविशेषणस्य साहित्यस्याविवक्षितत्वात्। च-शब्दस्यापि प्रैषानुवचनरूपधर्मसाहित्यपरत्वेन प्रैषत्वानुवचनत्वरूप-धर्मयोरेकाधिकरण्यरूपसाहित्यबोधकत्वाभावात्। तस्य च प्रति प्रधानं गुणाम्वयन्यायेनैवास्मन्मतेऽपि सिद्धेरनुवादकत्वाच्च। अतश्च सर्वत्रैव समाख्याप्राप्तकर्त्रन्तरबाधेन वाक्यान्मैत्रावरुणनिवेशः। न चात्रानेकोद्देशे वाक्यभेदो दोषः। अर्धमन्तर्वेदि मिनोतीतिवदाख्यातैकत्वा-भावात्। अत एवैकवाक्योपादानगम्यसाहित्यस्योद्देश्यगतस्याप्रतीत-त्वादेव नाविवक्षापत्तिः।

न चैवमपि शुद्धप्रैषेष्वध्वर्युकर्तृकत्वस्य शुद्धानुवचनेषु च हो-तृकर्तृकत्वस्यैव समाख्यया प्राप्तेः कर्त्रन्तरानपेक्षत्वादेव न मैत्रावरुण-विधिः, प्रैषान्तानुवचनेषु तु प्रैषत्वेनाध्वर्युकर्तृकत्वस्यानुवचनत्वेन च होतृकर्तृकत्वस्य प्राप्तेर्विरोधेनोभयोरपि निवृत्तौ कर्त्रन्तरापेक्षायां तत्रैव मैत्रावरुणविधिरिति पार्थसारथ्युक्तं युक्तमिति वाच्यम्। प्रैषान्तानुवचनानामपि हौत्र एव पाठस्य वार्त्तिकोक्तत्वेनाध्वर्युकर्तृ-कत्वाप्राप्तेः। उभयत्र पाठेन तत्प्राप्तावपि च विकल्पेनोभयनिवे-शोपपत्तेर्निवृत्त्यप्रसङ्गाच्च।

यदपि वार्त्तिके अग्नीषोमीयाङ्गभूतेषु प्रैषान्तानुवचनेषु यजेति

शब्दस्य प्राकृतत्वात्तन्मात्रेऽतिदेशेनाध्वर्योः प्राप्तिः। प्रेष्येति प्रेषान्तराम्नानाद्वा। इतरमन्य इति न्यायेन प्रतिप्रस्थातुः। सोमाङ्गान्तर्वर्त्ति-यजेति शब्दे तु होतर्यजेति लिङ्गानुरोधेन समाख्यां बाधित्वा मैत्रावरुणस्य। तदतिरिक्तपदान्तरेषु होतुरेव। ततश्चांशभेदेन नानाकर्तृप्राप्तेरेकपदार्थे च कर्तृद्वयासम्भवात् प्रच्युतयोर्मैत्रावरुणविधिरित्युक्तम्। तदपि यजेति शब्दस्याग्नीषोमीयादौ हौत्र एव प्रत्यक्षपठितत्वेन समाख्यया अतिदेशकाध्वर्य्यवादिबाधेन होतृप्राप्तेस्तस्य च होतर्यजेति लिङ्गेन बाधेऽपि तत्पुरुषस्य मैत्रावरुणस्यैव यजेतिपदे तदेकवाक्यतापन्नपदान्तरेषु च प्राप्तेरुपेक्षितम्।

अबाधेऽपि वा समाख्यायादुर्बलत्वेन यजेति शब्दे तदेकवाक्यतापन्नपदान्तरेषु च प्रतिप्रस्थातुरेवैकस्य प्राप्तेर्न कर्त्रन्तरापेक्षा। एवं सोमाङ्गभूतेष्वपि। अतः सर्वत्रैव मैत्रावरुण इति प्राप्ते।

वाक्यभेदाङ्गीकारेऽनुषङ्गापत्तेश्च-शब्दवैयर्थ्याच्च पदद्वयेन प्रेषान्तानुवचनान्येवार्धमन्तर्वेदीतिवल्लक्षयित्वा तेष्वेव मैत्रावरुणविधानम्। च-शब्देन धर्मिणोरितरेतरयोगस्य स्वरूपे कार्ये वा असम्भवात्समुच्चयस्य च न्यायादेव प्राप्तेरानर्थक्यतदङ्गन्यायेन धर्मयोरेव प्रेषत्वानुवचनत्वयोरितरेतरयोगप्रतीतेर्निपातस्थले च परस्परान्वयस्य व्युत्पत्तिसिद्धत्वेन वाक्यभेदाभावाल्लक्षणां विनैव परस्परयुक्तप्रेषत्वानुवचनत्वावच्छिन्नोद्देशेन मैत्रावरुणोविधीयते। अत एव प्रेषानुवचनत्वावच्छिन्ने एव लक्षणोपपत्तेर्न युक्तोवाक्यसङ्कोच इत्यपास्तम्। वस्तुतस्तु शुद्धानुवाक्यास्वपि कासुचिन्मैत्रावरुणस्य याज्ञिकसम्मतत्वाच्च-शब्दो नेतरेतरयोगार्थः। अपि तु धर्मिसमुच्चयार्थ एव सन्ननुवादः।

न चैवं सार्वत्रिकत्वापत्तिः। अनुवादस्य सति सम्भवे सन्निहितगामित्वनियमेन यानि प्रैषानुवचनान्यधिकृत्यायं विधिः प्रवृत्तस्तद्विषयत्वस्यैवाङ्गीकारात् ॥ ३॥१२५॥

चमसात् ॥ चमसेषु विशेषसमाख्यया चमसाध्वर्युरूपया तेषामेव होमादौ कर्त्तृत्वम्। समासान्तर्गताध्वर्युपदस्य रूढ्या शुद्धाध्वर्युपदवदेव वरणादिनिमित्तत्वाविशेषात्। इयांस्तु विशेषः, यत्तस्य सर्वकार्येषु विनियोग एतेषां तु चमसेष्वेवेति। यदि तु तत्तद्वरणानां भेदादनेकशक्तिकल्पने गौरवमाशङ्क्येत। ततोऽस्तु एष्वध्वर्युशब्दस्य गौणत्वम्।

न च विनिगमनाविरह इति शङ्क्यम्। चमसाध्वर्युवरणवाक्ये रूढिकल्पने चमसाध्वर्युपदस्यैव तत्कल्पनापत्तेरध्वर्युपदस्य ततोभिन्नस्य शक्त्यन्तरकल्पनावश्यम्भावात्। अतो लाघवात् प्रचुरप्रयोगाच्चाध्वर्युपदस्यैव प्रसिद्धाध्वर्यावेव शक्तिरितरेषु तु गौणी। तथापि तु ग्रहादौ तस्यापि होमादिकर्त्तृत्वाद्धोमकर्त्तृत्वसादृश्यमात्रेणैतेषु गौणत्वोपपत्तेः सामान्यसमाख्यां बाधित्वा चमसेष्वेतेषामेव होमादिकर्त्तृत्वमिति प्राप्ते।

गौणत्वस्यावश्यकत्वे चमसवृत्तिहोमादिकर्त्तृत्वेनापि गौणत्वोपपत्तौ स्वोपजीव्यसामान्यसमाख्याबाधे प्रमाणाभावाच्चमसेष्वप्यध्वर्युरेव होमादिकर्त्ता तस्यान्यत्र व्यापृतत्वे तु गौणसमाख्यया चमसाध्वर्यवस्तेषामप्यसम्भवे इतरमन्य इत्येवं प्रतिप्रस्थात्रादयः ॥ ३॥१२६॥

वेदोपदेशात् ॥ औद्गात्रे सामवेदे श्येनेन श्रुतो ज्योतिष्टोमोधर्मवान्। तत्र प्राकृताङ्गेष्वतिदेशेन नाना ऋत्विजः प्राप्ता औपदे-

शिक्या औद्गात्रसमाख्यया बाध्यन्त इति तेषूद्गातैव कर्त्ता। समाख्या हि कर्त्तृप्रापिका, कर्त्ता च प्रयोगाङ्गं, प्रयोगश्च प्रयोगविधिना साङ्गस्यैवैको विधीयत इति समाख्यया अङ्गेष्वपि कर्त्तृविधिरुपदेशेन। अतश्च यथैवाध्वर्यवमृथेन चरन्तीत्यपान्देशत्वात्साङ्गभावनाविषयत्वप्रतीतेः प्राकृतेषु प्रयाजादिष्वग्निबाधकत्वं, तथा प्रकृतेऽपि।

न च समाख्यायाः प्रधानमात्रे श्रुताया अपि अङ्गविषयत्वस्य कल्पनीयत्वेन प्रयोगविध्याश्रितत्वात्तस्य चातिदेशप्रापिताङ्गविषयत्वेन तदपेक्षत्वात्तदुपजीविचोदकप्रापितनानाकर्त्तृत्वबाधानुपपत्तिरिति वाच्यम्। सत्यपि तृतीयाश्रवणे अपामप्यङ्गविषयत्वस्य कल्पनीयत्वेनोक्तविधयाऽग्निबाधकत्वानापत्तेः। न हि तृतीयायाः साङ्गवृत्तिकरणत्वे शक्तिरपि तु प्रधानकरणत्व एव। तत्तु अङ्गवैशिष्ट्यं विनाऽनुपपन्नमिति अङ्गविषयत्वं कल्प्यमेव।

अतश्च शरादौ क्लृप्तोपदेशस्थल इव कल्प्योपदेशस्याप्यतिदेशबाधकत्वं वाच्यम्। अत एव यत्र प्रकृतावेव स्तोत्रशस्त्रादौ वेदान्तरीयविशेषसमाख्यारूपेणोपदेशेनैव कर्त्रन्तरप्राप्तिस्तत्राङ्गविषये कल्प्यायाः प्रधानसमाख्याया बाध दृष्ट एव। वर्णितं ह्येतद्गुणमुख्यक्रमाधिकरणे। प्रकृते त्वातिदेशिकत्वात् प्रधानसमाख्याया एव प्राबल्यमिति प्राप्ते।

इहापि प्रयोगविध्याश्रितायास्तस्या अङ्गविषये कल्प्यत्वेनोपजीव्यातिदेशापेक्षत्वात्, तेन च कर्त्तृविशिष्टानामेव प्राप्तत्वेन कर्त्रपेक्षाऽभावात्, समाख्याया आकाङ्क्षाविरहे श्रुत्यकल्पकत्वात्, कल्पकत्वेऽपि वा प्राकृताङ्गविषयत्वाभावान्न प्राकृतकर्त्तृबाधकत्वम्। न चैव-

मस्त्वपि तथात्वापत्तिः। अविधेः प्रत्यक्षत्वात्तासाञ्च धात्वर्थान्वयस्या-व्युत्पन्नत्वात् तृतीययाऽवभृथकरणकभावनायामन्वयावगतेर्दृष्टत्वेन च भावनोत्पत्त्यन्वयित्वाभावेन तत्प्रयोगान्वयित्वात् प्रयोगस्य चाङ्गप्रधा-नसाधारणत्वःङ्गावनाऽन्वयद्वारा पाश्चात्यतद्विशेषणान्वये अविशेषणोभ-यान्वयतात्पर्य्यावगत्योपदेशेनैवं प्रधान इवाङ्गेष्वमग्निबाधात्*। अत-एव यत्र तृतीयायाः श्रवणाभावो 'यथा यज्ञाथर्वणं वै काम्या इष्टयः ता उपांशु कर्त्तव्या इत्यादौ, तत्र प्रधानकर्मकभावनायामेवान्वयात्-त्तस्यां चाङ्गान्वयाभावेन प्रधान एव प्राकृतस्वरादिबाधकत्वम्। प्रकृते तु समाख्यायाः प्रधानमात्रविषयत्वात्तस्य च स्वामिकर्तृकत्वे-नान्यकर्तृकत्वानुपपत्तेः स्वनिर्विषयत्वापत्त्या कथञ्चिदानर्थक्यतदङ्ग-न्यायेनाङ्गमात्रविषयकत्वकल्पनेऽपि क्लृप्तकर्तृकाङ्गविषयत्वकल्पने प्र-माणाभावात्कष्टकविनोदनाद्यौपदेशिकाङ्गविषयत्वमेव कल्प्यते।

वस्तुतस्तु तेषामपि विशिष्य स्वसमाख्ययैव कर्तृप्राप्तेर्न प्रधान-समाख्याविषयत्वम्। अपि तु यानि वेदत्रयाविहितानि स्मृत्याद्य-नुमितवेदविहितान्यङ्गानि, तद्विषयैव सेति ध्येयम्। अतः प्राकृता-ङ्गेषु नानेव कर्त्तारः। किं च समाख्यायाः पाठमात्रनिबन्धनत्वे-नोक्तैः स्वचेत्यादिवद्विधाननिबन्धनत्वाभावात् प्राकृतानां च सामवेदे अपठितत्वादपि तद्विषयत्वाभावः ॥३॥१२७॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
तृतीयाध्यायस्य सप्तमः पादः।

---

* इत्यमेव पाठः सर्व्वत्र। इवाङ्गेष्वप्यग्निबाधात्,—इति प्रतिभाति।

## अथ अष्टमः पादः ।

स्वामिकर्म ॥ वरणं दक्षिणादानं च समाख्ययाऽध्वर्य्वादिभिरेव कार्यम् । अध्वर्युश्च यथा तान् स्वद्रव्येण परिक्रीणीते तमुपायं यजमानः कुर्यात् । अध्वर्योस्त्वेतरमन्य इति न्यायेन वरणादिकं प्रतिप्रस्थाता कुर्यात् । स चाध्वर्युर्दक्षिणानानात् तेनानतः स्वकृत्यं कुर्यात् । ऋत्विगन्तरार्थं स्वद्रव्यं दातुं यजमान उपायान्तरं कुर्यादिति प्राप्ते ।

अवश्यं वृतोऽध्वर्युरन्यान् वृणीते । अन्यथा ध्वर्युत्वासम्भवात् । वरणस्यादृष्टार्थत्वाद्यापत्तेश्च । तद्वरणं च येनादौ कर्त्तव्यं, तस्याध्वर्युगुणत्वसम्पत्तये वरणस्यावश्यकत्वात्तस्य च समाख्यातः सकर्त्तृकत्वावश्यंभावाद्वरणे तावत्समाख्याबाध आवश्यकः । एवं दक्षिणादानेऽपि । उपायान्तरकल्पने गौरवापत्तेः । प्रयोगवाक्यावगतस्वामिकर्त्तृकत्वबाधापत्तेश्च । समाख्याया एव केवलाया बाधः ।

वस्तुतस्तु । सर्वत्र स्वामिकर्त्तृकत्वप्राप्तौ वरणेनैव दक्षिणादानेनाप्यन्यत्रान्यकर्त्तृकत्वसिद्धेः समाख्यया नियममात्रं क्रियत इति स्वलाघवानुरोधेनापि न समाख्यावरणभरणविषयिणी । सत्यपि वा तस्मिन्नुपायान्तरकल्पनाद्यनुरोधेनैव दानमात्रे स्वामिकर्त्तृकत्वम् । यत्र तु वचनं यथा, य एतामिष्टकामुपदध्यात्स त्रीन्वरान्दद्यादित्यादौ, तत्राध्वर्य्वादीनामपि दानकर्त्तृत्वम् । अत्र हि स्वामिकर्त्तृकत्वे ह्युपधानस्य सामानाधिकरण्येन तत्समानकर्त्तृत्वावगतेरस्यापि तत्कर्त्तृत्वे उपदध्यादिति परस्मैपदानुपपत्तिः । तस्य त्रित्परत्वेन उपधातृभिन्न-

गामित्क्रियाफलकत्वावगतेः। यदि तु क्रियाफलस्याग्न्यादिगतत्वात्प-रस्मैपदोपपत्तिरित्याशङ्क्येत, ततः प्राप्तोपधानानुवादेन दानस्य तत्-कर्त्तृत्वस्य च विधौ वाक्यभेदापत्तेः, य इत्यनेन कर्त्तृप्राप्तिप्रतीते-श्चोपधानस्याध्वर्युकर्त्तृकत्वावश्यायात्तत्समानकर्त्तृकस्य दानस्यापि तत्-कर्त्तृकत्वसिद्धिः॥ ३॥१२८॥

संस्कारास्तु॥ वपनादयः फलिसंस्काराः समाख्यानादध्वर्युक-र्त्तृकाः। तेनाध्वर्युणा क्षुरन्दन्तकाष्ठं जलं च गृहीत्वा यजमानस्य केशवपनादिकं दन्तधावनं स्नानं कारणीयं अञ्जनाभ्यञ्जनवत् इति प्राप्ते।

वपत इत्यात्मनेपदाद्वपनफलाश्रयस्य यजमानस्यैव तत्कर्त्तृत्वं प्रतीयते। अस्ति च तस्यापि छेदनाख्यवपनाधारत्वेन स्थाली पच-तीवत् तत्कर्त्तृत्वम्। तदादायैव च तस्मात् केशान्वपाम्यहमिति प्रयोगः। यस्तु नापितोवपतीत्यादिप्रयोगः, स च्छेदनानुकूलक्षुर-क्रियाकर्त्तृत्वमादाय। तत्प्रयोजककर्त्तृत्वमादायैव नापितो यजमानं वापयतीत्यादिप्रयोगः। अतश्च वपत इत्यात्मनेपदस्थले आधार-त्वमादायैव तत्कर्त्तृत्वोपपत्तौ क्षुरग्रहणकर्त्तृत्वेऽपि तात्पर्यकल्पने प्रमाणाभावः। तेनार्थाच्चिप्तस्य यजमानकर्त्तृत्वस्य नियम एव। प्रमाणाभावे अध्वर्युकर्त्तृकत्वनियमस्य कः प्रसङ्ग इति नापित-कर्त्तृकमपि तत्।

सोमे तु प्रवपति देवस्त्व इति परस्मैपदादध्वर्युकर्त्तृकगोदानव-पनोत्तरं नापिताय क्षुरं प्रयच्छतीति विधानात्तत्कर्त्तृकमेव तत्। एवमन्यत्राप्यात्मनेपदयुक्ते द्रष्टव्यम्। अत एव यत्र तमभ्यनक्ति शरेषी-

कथाऽनन्ति दण्डेन दीक्षयतीत्यादौ परस्मैपदनिर्द्देशोऽधिकः श्रुतस्तत्र तत्त्यागाधारत्वमादायात्मनेपदोपपत्त्या यजमानकर्त्तृकत्वे व्यापारान्तरस्यापि विधेयत्वादध्वर्युकर्त्तृकत्वमिष्टमेव ।

स्नाने तु स्वनिष्ठव्यापार एव स्नातीति परस्मैपदस्यापि प्रयोगादन्यकर्त्तृके च स्नापयतीत्येव प्रयोगाद् यजमाननिष्ठव्यापारस्यैव विधेयत्वेनान्यकर्त्तृकव्यापारस्याविधेयत्वेन नाध्वर्युनियमः । न चात्र परस्मैपदादन्यकर्त्तृकत्वनियमः, स्नाधातोः स्वरितेत्त्वाद्यभावेन तदभावात् । अतः फलिसंस्काराः स्वामिकर्त्तृका एव, कर्त्तृसंस्कारास्तु हिरण्यमालित्वादयः सामान्यविहिताः सर्वेषामेव, विशिष्य विहितास्तु तेषामेवेति न तत्रापि समाख्यया नियमः । तस्या नियामकत्वाच्चलेन प्रापकत्वाभावादिति वक्ष्यते ॥ ३ ॥ १२९ ॥

तपश्च ॥ सोमे द्व्यहं नाश्नाति त्र्यहं नाश्नातीति श्रुतम् । तत्रायमशनप्रतिषेधोऽनृतवदनप्रतिषेधवदेवादारादुपकारको न फलिसंस्कारकः । आत्मनेपदाद्यभावात् । सत्त्वेऽपि वा स्वरितेत्त्वाद्यभावाच्च । अतश्च समाख्यानादध्वर्युकर्त्तृकत्वम् । वस्तुतस्तु । अनृतवदेन प्रतिषेध्याशनस्याविहितत्वादभावस्य चाननुष्ठेयत्वाच्च समाख्याविषयत्वमिति कर्त्तृमात्रविषयत्वे प्राप्ते ।

आरादुपकारकत्वपक्षे अशनस्य क्रतुवैगुण्यजनकत्वं तस्य च फलप्रतिबन्धकत्वमित्यादिकल्पनाऽपेक्षया लाघवेनाशनाभावस्य दुःखजनकतया क्लृप्तत्वात्तद्दुःखस्य च स्वजनकीभूतपापनाशकत्वस्यापि क्लृप्ततया केवलं तत्पापस्य सोमफलप्रतिबन्धकत्वमात्रकल्पनया अशनाभावस्य यजमाननिष्ठफलप्रतिबन्धकाभावसम्पादकत्वमेव यद्दानशास्त्रादा तेषार्थ-

इति वाक्यशेषानुसारात् कल्पयितुमुचितम् । अतश्च तस्य लिङ्गादेव यजमाननिष्ठत्वम् । न ह्यन्यसमवेतदुःखेनान्यदीयं पापं नश्येत् । न वा ऋत्विग्गतपापस्य स्वामिगतफलप्रतिबन्धकत्वकल्पनम् । गौरवात् । अत एव यत्र ऋत्विज उपवसन्तीत्यादिवचनं तत्रानृतवदनन्यायेनाराादुपकारकत्वकल्पनं व्यधिकरणस्यैव वा फलप्रतिबन्धकत्वादिकल्पनमिति द्रष्टव्यम् । अत एव तत्र न समाख्या नियामिका ॥ ३ ॥ १२० ॥

गुणत्वाच्च ॥ ये ऋत्विक्संस्कारा हिरण्यमालित्वादयः तत्तद्वेदपठितास्ते समाख्यानादध्वर्य्वादिना कर्त्तव्याः, बहुत्वस्योद्देश्यगतत्वेनाविवक्षितत्वात् । अथाप्यनुवादापेक्षा, तदा तत्पुरुषैः कार्या इति प्राप्ते ।

अनियतकर्त्तृप्राप्तौ समाख्यया लाघवेनापेक्षितनियममात्रकरणात् प्रकृते च संस्कार्यस्य प्रतिप्रधानावृत्तिन्यायेन सर्वस्यैव नियतप्राप्ततया नियमानपेक्षत्वान्न समाख्यायास्तन्नियामकत्वम् । कर्त्रन्तरपरिसङ्ख्यायकत्वं तु वैरूप्यापत्तेरयुक्तम् । यदि तु समाख्यायास्तत्तत्पदार्थवाचिन्याभेदेनास्या हिरण्यमालित्वविषयिण्याः परिसङ्ख्यायकत्वमेवेत्याशङ्क्येत, तथापि समाख्यया वचनस्य सङ्कोचायोगादेव सर्वविषयत्वनिश्चयः ॥ ३ ॥ १२१ ॥

तथा कामः ॥ ये गुणजन्याः कामाः, यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुयादित्यादयस्ते मानाद्याश्रयस्य तावदाध्वर्यवत्वात्तत्सामानाधिकरण्याच्च कामयतेस्तत्समानकर्त्तृकत्वप्रतीतेरध्वर्युनिष्ठा एव । अत एव यत्र दध्नेन्द्रियकामस्येति वैयधिकरण्यं तत्र यजमानगामित्वमेव । प्रक्षेपाख्यहोमस्याध्वर्यवत्वादिति प्राप्ते ।

मिनुयादिति ङितः परस्मैपदनिर्देशादध्वर्युभिन्नकर्त्तृकत्वावगतेः

सामानाधिकरण्यबाधेन याजमानत्वमेव। यत्रापि यो वृष्टिकामः स सौभरेण स्तुवीतेत्यादौ न परस्मैपदं, तत्रापि नोद्गातृगामित्वम्। ऋत्विक्कामनाऽनुरोधेन यजमानफलसाधनीभूतनित्यगुणबाधानुपपत्तेः। अतस्तत्र सामानाधिकरण्यमात्मनेपदञ्च प्रयोजककर्त्तृत्वाभिप्रायेणैव व्याख्येयम्। अतएव यत्र न नित्यगुणबाधोबाधेऽपि वा साक्षादेव वचनं, तत्र स्वामिभिन्नगामित्वेऽपि न क्षतिः। यथाऽऽत्मने वा यजमानाय वा यं कामं कामयते तमुद्गायेदिति। अत्र पृथग्यजमानपदश्रवणादात्मशब्दश्रवणाच्चात्मपदेनोद्गातैवोच्यते। अतएवाऽनुषङ्गेण वाक्यभेदोऽप्यदोषः। तमित्यनेनोभयविशिष्टं वैकल्पिकं कामं परामृश्य उद्देश्यत्वविधानाद्वा न वाक्यभेदः। गायतेश्च गायन्ति यं सामगा इत्यादौ अर्थाभिधानेऽपि प्रयोगाच्च कामरूपार्थस्योद्देश्यत्वविघातः॥ ९॥ १२२॥

मन्त्राश्च॥ इह कार्ये करणभूताः कर्मफलप्रकाशकाः कर्माङ्गभूतमन्त्रा आयुर्दा अग्ने अगन्म सुवरित्यादयः। ते समाख्यानाद्वाध्वर्यवाइति प्राप्ते।

यद्यप्येते लिङ्गादिनाऽऽहवनीयोपस्थानादौ विनियुक्ता न सूक्तवाकादिवत्तृतीयया इतिकरणेन वा विनियुक्तत्वाभावादानुषङ्गिकफलकल्पकास्तथापि कर्मफलमेवोपस्थानादिप्रयोज्यं प्रोत्साहनार्थं प्रकाशयन्ति। तत्र च यत्रैतत्प्रकाश्यं फलं कर्मजन्यत्वेन क्लृप्तं, तत्र तच्छक्त्यैव नियतमनियतं वा प्रकाश्यते। अत एव दर्शपूर्णमासादौ स्वर्गायुरादेः फलत्वात्तत्तत्फलार्थप्रयोग एव तत्तन्मन्त्रो न फलान्तरार्थप्रयोगे। यत्र तु नैतत्प्रकाश्यस्य कर्मफलत्वं; तत्र स्वरूपया

कर्मफलमेव एतेन मन्त्रेण प्रकाश्यत इति द्रष्टव्यम् । तच्च फलं यजमानगाम्येव । ऋत्विक्फलस्योपस्थानाद्यप्रयोज्यत्वेन तत्प्रकाशने तदङ्गत्वानुपपत्तेः । तस्य यजमानादाशास्यत्वेनाशिषं प्रत्यनाशास्यत्वाच्च । न च यजमानफलमेवाध्वर्युणाऽऽशास्यताम् । मदृति अगन्म इति चाध्वर्य्यप्रकाशकत्वेन लिङ्गविरोधात् । अतो याजमाना एवैते । अत एव यत्रैव नैतादृशं लिङ्गं, तत्राध्वर्यवा एव ॥ २ ॥ १३२ ॥

द्व्याम्नातेषु ॥ ये मन्त्राः सामान्यत आध्वर्यवसमाख्याते काण्डे समाख्याताः पुनश्च याजमानेऽपि विशेषतः समाख्यायन्ते । यथाऽऽज्यग्रहणमन्त्राः स्रुग्व्यूहनमन्त्राश्च । ते तावत्तत्रप्यभ्यासे प्रत्यभिज्ञायमानत्वाद्विध्यभावाच्चाभिन्नाः । अतस्तत्र गुणभूतकर्तृद्वयस्य विकल्पः । विशेषसमाख्याबलाद्वा यजमान एव कर्त्ता । आज्यग्रहणस्रुग्व्यूहनादेर्वा निःसन्दिग्धमाध्वर्यवत्वात्तदङ्गभूता मन्त्रा अपि तत्कर्तृका एव । न चैवं द्विःपाठवैयर्थ्यम् । एकत्र स्वरूपज्ञानमन्यत्र विनियोग इत्येवं सार्थक्यादिति प्राप्ते ।

एकपाठेनैवोभयसिद्धौ द्वितीयस्य वैयर्थ्यापत्तेस्तस्योच्चारणान्तरविधायित्वावगतेस्तस्य च समाख्यान्तरेण कर्त्रन्तरसिद्धिः । उच्चारणान्तरप्रयोजनं तत्क्रियाप्रत्यवेक्षणमिति नादृष्टकल्पनाऽपि । यद्यपि च तन्नियमेन यजमानस्य न प्राप्तं, तथापि द्विःपाठबलादेव तत्कल्प्यमिति न दोषः । यत्र तु नैवंविधं प्रयोजनं कर्तृभेदो वाऽसम्भवी । यथा अयं सहस्रमानव इत्यस्यामौद्गात्रे एव प्रगीताप्रगीतभेदेन समाम्नातायाम् । तत्रागत्याऽभ्युदयशिरस्कत्वं परिकल्प्य उत्पत्तिविनियोगपरत्वेन सार्थक्यमिति विशेषः ॥ ३ ॥ १३४ ॥

ज्ञाते च॥ वाजपेयादौ यत्र ब्रह्मा यजमानं वाचयतीति श्रुतं, तत्र याजमानो मन्त्रः। वाचनमाध्वर्यवमित्यविवादम्। परन्तु वाचयतेर्ब्रह्मचारिणो गायत्र्युपदेशादौ शिक्षणवाचित्वेन क्लृप्ततया प्रकृतेऽपि शिक्षणविधायित्वावगतेः तस्य चादृष्टार्थत्वप्रसङ्गेन ज्ञातर्थसम्भवाद्युक्तविधानानुरोधेनाज्ञ एव वाजपेयादावधिकारी। अतोऽन्येषां क्रतूनामध्ययनविधिसिद्धज्ञानोपजीवनेन ज्ञाचधिकारकत्वेऽपि वाजपेयादौ तदसम्भवादज्ञस्यैव वाचनमिति प्राप्ते।

वाचयतेर्वचनानुकूलव्यापारमात्रवाचित्वेन क्वचिदन्यथानुपपत्त्या शिक्षणग्रहणेऽपि स्मरणमात्रग्रहणेनापि प्रकृते वाचनोपपत्तेरर्थज्ञानाचेपकत्वे प्रमाणाभावात् ज्ञस्यैव वाचनम्। तच्च खण्डशो वा इमं मन्त्रं ब्रूहीत्येवं वेत्यन्यदेतत्॥ २॥ १२५॥

याजमाने॥ दर्शपूर्णमासयोर्वत्समुपावसृजतीत्यादीनि कानिचित्कर्माण्याध्वर्यवसमाख्यायुक्तानि प्रत्येकं विभिन्नदेशे विधाय, पुनस्तान्येव याजमानसमाख्यायुक्तानि द्वन्द्वोवत्सञ्चोपावसृजत्युखाञ्चाधिश्रयतीत्याद्युक्त्वैतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि सम्पाद्य यजेतेति श्रुतम्। तदेषां द्व्याम्नातमन्त्रवदुभयकर्तृकत्वं तावन्न सम्भवति। अदृष्टार्थत्वापत्तेः। न चाभ्यासात्कर्मार्थत्वम्। अन्यपरत्वात्। अत एव एककर्तृकत्वावश्यंभावे विशेषसमाख्यानाद्याजमानत्वे प्राप्ते।

नैषां याजमानकाण्डे विधानम्। आध्वर्यवे भिन्नदेशविहितानामेव द्वयोर्मिथः प्रत्यासन्नत्वाख्यद्वन्द्वतारूपगुणविधानार्थमेवानुवादात्। अतः पदार्थेषु तावदध्वर्युरेव कर्त्ता। न च द्वन्द्वतायामेव यजमानः प्रभुः। अन्येन क्रियमाणानामन्येन द्वन्द्वतायाः सम्पादयितुमशक्य-

त्वात्। द्वन्द्वता हि नाम एकया वत्सोपावसर्जनक्रियया धेनुवत्सयोः प्रत्यासन्नत्वसम्पादनं, एकया चावहननक्रिययोलूखलमुसलयोः। एवं द्वादशस्वपि द्रष्टव्यम्।

न च तत्कर्त्तृत्वानुरोधेन प्रधानभूतपदार्थानां कर्त्तृबाधः। अङ्गगुणविरोधन्यायेन तदसम्भवात्। न च तानि सम्पाद्य यजेतेति क्त्वाप्रत्ययबलेनैव द्वन्द्वतायाः यागसमानकर्त्तृकत्वावगतेः वचनादेवाङ्गनिष्ठादपि पदार्थेषु समाख्याया बाध इति वाच्यम्। क्त्वाप्रत्ययस्य प्रयोजकत्वेनाप्युपपत्तेः प्रधानसमाख्याबाधकत्वानुपपत्तेः। एवं द्वन्द्वतानिष्ठसमाख्याऽपि प्रयोजकत्वाभिप्रायेणैव व्याख्येया। अतः स्मरणमात्रं याजमानं पदार्थास्त्वाध्वर्यवा एव ॥ २ ॥ १२६ ॥

विप्रतिषेधे॥ दैक्षपशौ यूपपरिव्याणे आध्वर्यवः करणमन्त्रः परिवीरसीत्ययं श्रुतः। तथा, युवा सुवासा इत्ययं क्रियमाणानुवादी हौत्रोऽपि। तौ च द्वावपि यूपाय परिवीयमाणायानुब्रूहीति प्रैषवशादेतदुत्तरपाठाच्चैतत्प्रैषाव्यवहितोत्तरक्षणे एककालीनौ। आङ्गपरिव्याणभावनाकरणसमकालत्वाच्च क्रियमाणानुवादित्वाविरोधः। सोमविकृतौ च कौण्डपायिनामयने तथैव प्राप्तौ। तत्र च यो होता सोऽध्वर्युरिति च श्रुतम्। तस्य च वचनात्तत्रे चानतिप्रयुक्तवरणजन्यहोतृत्वाध्वर्युत्वादेरानत्यभावेनाभावाद्योहोतेत्यत्र होत्रध्वर्युपदाभ्यां तत्कार्यलक्षणया कार्यद्वयेऽप्येककर्त्तृकत्वं विधीयते। अतस्तौपदेशिकैककर्त्तृकत्वबलेन प्राकृतैककालत्वबाधात् प्रथमतः करणं पश्चादपर इत्येकः पक्षः।

होतृत्वादेरध्यवसायमात्रनिमित्तकत्वस्य स्थापितत्वात् सत्रेऽपि

तत्सम्भवेन पदद्वये कार्यलक्षणायां प्रमाणाभावाज्जघन्य एवाध्वर्युपदे तल्लक्षणामङ्गीकृत्याध्वर्यवपदार्थानां 'होतृसंस्कारकत्वेन विधानम्। अप्राकृतकार्यकारित्वापत्तेः होतृपदे कर्मत्वलक्षणापत्तेश्च होतैव वा तत्कर्त्तृत्वेन विधीयते। तथापि तु परिधौ पशुं नियुञ्जीतेत्यत्र परिधित्वाविरोधेनैव होतृत्वाविरोधेनैव कर्त्तृत्वविधानाद्धौत्रः क्रियमाणानुवाद्येव तेन प्रयोक्तव्यः। अपरस्तु तेन कालान्तरेऽन्येन वा तत्पुरुषेण तस्मिन्नेव काले प्रयोक्तव्य इति प्राप्ते।

पुरोडाशकपालवदग्निपरिधानार्थस्यैव परिधेः पशुनियोजने विनियोगाद्युक्तं परिधिधर्माणां सत्वङ्गादीनां प्राबल्यम्। प्रकृते लब्धवशायनिमित्तहोतृत्वेनैवाध्वर्यवे विनियोगाद्धोतृकार्यस्य प्रयोजकत्वकल्पने प्रमाणाभावादाध्वर्यवस्य करणस्यैव प्रत्यक्षवाक्यावगतशेषित्वेन प्राबल्यात्मातिदेशिकसमाख्याप्रमाणकक्रियमाणानुवादिनः प्रायम्यं, न वा कालान्तरे तस्य होत्रा पाठः। स तु श्रेयान् भवतीति लिङ्गावगतक्रियमाणानुवादित्वबाधापत्तेः। नापि करणमन्त्राव्यवहितोत्तरक्षणे होत्रा तस्य पाठः। यूपायेत्यादिप्रैषे होतुः कर्त्तृत्वेन प्रैषार्थे तदसम्भवात्। अतस्तस्मिन् तत्काले एव होतृपुरुषोऽन्यः कश्चिदन्तरङ्गोऽध्वर्य्वादिः कर्त्ता। तस्य कर्मान्तरव्यापृतौ तु बहिरङ्गोऽपि॥ २॥ १२७॥

प्रैषेषु॥ प्रोक्षणीरासादयेत्यादयः प्रैषाः प्रैषार्थाश्च प्रोक्षण्यासादनादयः समाख्यानादध्वर्युणैवैकेन कर्त्तव्याः। न च स्वस्मिन् स्वस्य प्रैषानुपपत्तिः। चेतो वृथा खिद्यस इत्यादाविव स्वस्मिन्नपि स्वस्योपदेशसम्भवात्। वस्तुतोनैवायं प्रैषः। अपि तु प्रैषातिसर्गप्राप्त-

कालेषु क्रत्यार्थेति चकारेण लोटोऽपि प्राप्तकालतायां विधानात् प्राप्तकालतायामयं लोट्। अग्नीदग्नीन्विहरेति मैत्रावरुणस्य प्राप्तः काल इति। युष्मदर्थकोमध्यमपुरुषस्तु साधुत्वार्थः। अथ वा। हे मैत्रावरुण, तव प्राप्तः काल इति क्रियायां चेतनत्वाध्यारोपेण सः। यत्र तु अग्नीदग्नीन्विहरेत्येवं प्रैषः, तत्रापि सम्बोधनानुरोधेन प्रैषार्थस्याग्नी-धकर्तृकत्वम्। वस्तुतस्तु हे अग्नीत् ममाग्निविहरणस्य प्राप्तः काल इति व्याख्यातुं शक्यत्वात् तत्रापि समाख्याबाध इति प्राप्ते।

समाख्यानुरोधेन मध्यमपुरुषस्य साधुत्वेन क्रियायां चेतन्यत्वा-रोपेण व्याख्याने प्रमाणाभावात् सम्बोधनमध्यमपुरुषयोश्चादृष्टार्थत्वा-पत्तेः प्रैषत्वसमाख्याबाधापत्तेश्च प्राप्तकालार्थकत्वानुपपत्तेः। प्रैषस्यापि चाग्निध्रौपचारिकत्वापत्त्या एकवाध्वर्युसमाख्याबाधेनोभयोर्भिन्नकर्तृ-कत्वमेव ॥ २ ॥ १३८ ॥

अध्वर्युः॥ तथापि बहुषु प्रधानभूतेषु प्रैषार्थेषु समाख्याबाधे प्रमा-णाभावादेकस्मिन् प्रोक्षणीरासादयेत्यादिप्रैषे एवाध्वर्युबाधेनान्यकर्तृ-कत्वम्। अत एव तिर्यञ्चं स्फ्यमन्वारयित्वा संप्रैषमाह यदन्यञ्चं धारयेत् इध्मोबर्हिरुपाध्वर्युं व्रणीतेति धारयितुर्भिन्नमध्वर्युं दर्शयतीति प्राप्ते।

प्रैषार्थस्यान्यकर्तृकत्वेऽपि प्रयोजकत्वेनाप्यध्वर्योः कर्तृत्वोपपत्तेः समाख्यायाः कुत्राप्यबाधात् प्रैषार्थानन्य एव कुर्यात् प्रैषोच्चारणं त्वध्वर्युः। स च सोमादावसति विशेषवचने प्रतिप्रस्थात्रादिरन्यत्-पुरुषः, दर्शादौ त्वाग्नीध्र एव कर्मकरत्वेन याज्ञिकप्रसिद्धत्वादिति ध्येयम्। यत्तु लिङ्गं, तद्यद्यध्वर्युरन्वारयेत्तदा स्फ्यस्तं चल्लीते-त्यर्थेऽपि बाधकाभावाद्धारणप्रैषयोराध्वर्यवत्वेऽप्युपपन्नम्। स्फ्यधार-

यमपि कल्पसूत्रेषु आध्वर्यवमेव प्रसिद्धमिति । अथ वार्त्तिकं प्रौढिवादः ॥२॥१२९॥

ऋत्विक्फलम् ॥ ये इतिकरणेन तृतीयया वा विनियुक्ताः करणमन्त्रास्तेषां मान्त्रवर्णिकक्रियाजन्यफलकत्वकत्वं, न तु आयुर्दा अग्न इत्यादिवत् प्रधानफलानुवादकत्वमित्युक्तं कौस्तुभे । तद्वच-ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं परिगृह्णातीत्यादावन्वाधानक्रिया तावदाध्वर्यवी । मन्त्रलिङ्गवशेन प्रधानभूतक्रियायां समाख्याप्राप्तकर्त्तृबाधानुपपत्तेः ।

न च याजमानेन मन्त्रेणाध्वर्युगतक्रियाप्रकाशनम् । वयन्त्वेन्धाना-इति मन्त्रलिङ्गवशेन क्रियासमानकर्त्तृकत्वस्य मन्त्रे प्रतीतेः । अतश्च मन्त्रक्रिययोरुभयोरप्याध्वर्यवत्वात् फलमपि वर्चःप्रभृति तद्गतमेव । अन्यथा ममाग्ने इति मह्यं न मन्त्रामित्यादिमन्त्रलिङ्गविरोधापत्तेः ।

न च साङ्गप्रधानविधायिफलवाक्यावगतात्मनेपदानुरोधेनाङ्ग-फलानामपि स्वर्गकामकर्त्तृकत्वावगतेर्यजमानगामित्वमिति वाच्यम् । श्रुतस्यात्मनेपदस्य सावकाशतया तेन कल्पितस्यापि लैङ्गिकस्याध्वर्यु-वृत्तित्वस्य बाधानुपपत्तेः । न चात्मनेपदार्थस्यैव तद्विषये बाधे विधेरन्वाधानविषयेऽनुष्ठापकत्वस्यापि बाधापत्तिः । प्रमाणा-भावात् । अतोऽग्निसंस्कारार्थानुष्ठापितक्रियाजन्यानुषङ्गिकफलस्य क्रत्वनुपयोगिनोऽप्याध्वर्यवत्वेऽपि न काचित् क्षतिरिति प्राप्ते ।

यां काञ्चन यज्ञे ऋत्विज आशिष आशासते यजमानस्यैव सेत्य-न्यथासिद्धलिङ्गानुगृहीतात्मनेपदश्रुत्या यजमानगामित्वावगतिः । एतल्लिङ्गवशादेव च यत्र नात्मनेपदश्रवणं यथा जुह्वयादित्यादौ,

तत्रापि यजमानगामित्वम्। अतश्च तदनुरोधेन ममेति मम यजमानस्येत्येवं व्याख्येयम्। मह्यमित्यादौ त्वमच्छब्देन यजमान एवोपचारादभिधीयत इति न दोषः। प्रयोजनं, यद्येऽग्न्यन्वाधानाभावादूहानूहप्रयोजनासम्भवेऽप्यर्थानुसन्धानविशेषरूपं द्रष्टव्यम् ॥२॥१४०॥

कर्मार्थम् ॥ यत्र तु मां मा सन्ताप्तमित्यादाविति करणविनियुक्त एवासन्तापनादिरूपं फलं ऋत्विग्गामित्वेऽपि क्रतुविरोधिसन्तापनिवर्त्तकतया तदुपयोगि, तत्र यजमानस्य चेति षष्ठ्या; परम्परयाऽप्युपपत्तेर्लिङ्गानुरोधादृत्विग्गाम्येव ॥२॥१४१॥

व्यपदेशाच्च ॥ एवं यत्रापि तन्नौ सहेत्यादौ द्विवचनानुपपत्तिस्तत्रापि ऋत्विग्गामित्वम् ॥२॥१४२॥

द्रव्यसंस्काराः ॥ बर्हिर्धर्माणां प्रकृतावङ्गप्रधानसाधारणत्वमुक्तम्। अतश्च दैक्षपशावपि बर्हिषा यूपावटमवस्तृणातीति विहिते यूपावटस्तरणबर्हिष्यपि दार्शिकबर्हिर्धर्माभवेयुरिति प्राप्ते।

प्रकृतौ बर्हिषि हवींष्यासादयतीति वचनादङ्गप्रधानसाधारणहविरासादनार्थएव बर्हिषि धर्मा न कार्यमात्रार्थे इत्युत्तराधिकरणे वक्ष्यते। यद्यपि वा परिभोजनीयादिवत् प्राकृतकार्यमात्रार्थत्वं स्यात्, तथापि नाप्राकृतकार्ये यूपावटस्तरणबर्हिषि भवेयुः। उपकारपृष्ठभावेनैव पदार्थानामतिदेशेन विकृतावप्राकृतकार्यकारित्वकल्पनाऽनुपपत्तेः। न हि प्रकृतौ येन केनचित्सम्बन्धेन अपूर्वसम्बन्धि बर्हिरुद्देश्यतावच्छेदकम्। येनाप्राकृतस्यापि तत्सम्बन्धाद्धर्मग्राहकत्वं गृह्येत। सम्बन्धविशेषग्राहकप्रमाणबलेन तावद्विशेषाणामेव प्रवेशेनानुपस्थितसामान्यस्योद्देश्यतावच्छेदककोटावप्रवेशात्। न च तथापि

यूपावटस्तरणभावनायाधर्माकाङ्क्षायामेव फलचमसन्यायेन धर्मग्राहकत्वम्। लौकिकधर्मग्रहणेनाप्याकाङ्क्षानिवृत्तौ उपदेशातिदेशयोरभावात्। फलचमसे तु स्थानापत्त्या भक्षानुवादबलाच्चातिदेशकल्पनमिति विशेषः ॥३॥१४३॥

विरोधे॥ प्रकृतावपि च न समन्त्रकबर्हिर्लवनादिधर्माणां प्रकृत्यपूर्वसम्बन्धिबर्हिर्मात्रार्थत्वम्। अपि तु हविरासादनार्थबर्हिरर्थत्वमेव। अत एव पवित्रविधृत्यादिबर्हिषि नैते संस्काराः। त्रिधातु पञ्चधातु वा बर्हिर्लुनातीति विहितलवनं संस्कृतस्य बर्हिषस्तथैव समन्त्रकस्यासादितस्य। त्रिधातु पञ्चधातु वा बर्हिस्तृणातीती वचनेन सर्वस्यैव स्तरणे विनियोगात्, अमन्त्रलवनमात्रसंस्कृतस्य परिभोजनीयबर्हिषः प्राकृततदितरसर्वकार्यार्थत्वेन तत एव पवित्रादिकरणोपपत्तेः ॥३॥१४४॥

अपनयः॥ सोमे पुरोडाशशकलमैन्द्रवायवपात्रे प्रास्यति आमिक्षां मैत्रावरुणपात्रे धाना आश्विनपात्र इति श्रुतम्। तत्र शकलपदस्य उत्तरार्धादिपदवदेकदेशवाचित्वेन स्वतन्त्रपुरोडाशाक्षेपकत्वाप्रसक्तेः प्रातःसवनिकसवनीयपुरोडाशावयवपरत्वं तावन्निर्विवादम्। आमिक्षादौ तु तदभावात्पयस्यां मैत्रावरुणं श्रीणातीतिवल्लौकिकामिक्षादिग्राहकत्वेनोपपत्तौ कॢप्तप्रतिपत्तिबाधेन सवनीयगततद्ग्राहित्वे प्रमाणाभाव इति प्राप्ते।

द्वितीयया प्राशनस्यामिक्षादिप्रतिपत्तित्वावगमात्तदंशे औपदेशिक्या तया आतिदेशिकप्रतिपत्तिबाधोपपत्तेः प्रातःसवनिकसवनीयसम्बन्धिनामेव पुरोडाशादीनां ग्रहणम् ॥३॥१४५॥

विकृतौ ॥ अनारभ्य, यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्त्तव्या इति श्रुतमुपांशुत्वं प्रधानवदङ्गेष्वपि मन्त्रोच्चारणसत्त्वात्काम्यशब्दस्य च कामप्रयोजकत्वेनाङ्गेष्वपि प्रयोगोपपत्तेर्जनकमात्रपरत्वेऽपि चोद्देश्येष्टिविशेषणत्वेनाविवक्षितत्वादिष्टीनामेवाविवक्षितत्वे चोभेऽपि तद्दापत्तेः साङ्गेष्वङ्गमिति प्राप्ते।

अङ्गेषु कश्चिदपि काम्यशब्दप्रयोगाभावाज्जनकत्वसम्बन्धेन प्रधानमात्रपरत्वावगतेः काम्यत्वेष्टित्वोभयपरामर्शकतच्छब्दस्य चोद्देश्यपरत्वेनोभयविवक्षोपपत्तेः प्रकृतौ प्राकरणिकवैस्वर्याविरोधे निवेशासम्भवेऽपि काम्यविकृतीष्टिप्रधानमात्रे निवेशः। न ह्युच्चैः प्रवर्ग्येणाव भृथेनेत्यादिवत्करणविभक्तिनिर्देशो येन साङ्गस्य भवेत्। तव्यप्रत्ययेन कर्मत्वाभिधानात्तु प्रधानमात्र एव निवेशः ॥३॥१४६॥

सन्निधान ॥ श्येने, दृतिनवनीतमाज्यं भवतीति श्रुतम्। दृतिनवनीतं प्रकरणात् श्येनप्रकरणाङ्गम्। न ह्याज्यानुवादेन दृत्यधिकरणकनवनीतप्रकृतिविधिः। आज्यस्य नवनीतप्रकृतिकत्वस्य प्राप्तत्वात्। तदनुवादेन दृत्यधिकरणकत्वविधाने एकप्रसरताभङ्गापत्तेश्च। अतो वक्ष्यमाणोद्दिश्यमानार्थ एवैकोदृत्यधिकरणकनवनीतप्रकृतिकः सन्निधानात् श्येने विधीयते। आज्यपदन्तु तस्यैव नवनीतप्रकृतिकत्वानुवादः अन्यपदार्थतात्पर्यग्राहकत्वेति नानेकविधानता। अत एव श्येनोऽप्याज्यद्रव्यकत्वादुपांशुयाजविकार एव। गमकान्तरसत्त्वे तु सोमप्रत्याम्नायमात्रमिति प्राप्ते।

विशिष्टविधौ गौरवाद्यापत्तेः अतिदेशप्राप्ताज्यपरत्वमेवाज्यशब्दस्याङ्गीकृत्य तदुद्देशेन दृत्यधिकरणकनवनीतप्रकृतिकत्वमेव प्रयो-

गानःपातितया विधीयते। आज्यस्याङ्गत्वेनैव प्राप्तमिति तस्याच-
विषयता। यत्तु इतिनवनीतपदस्य तत्पुरुषत्वमङ्गीकृत्य इत्यधिकर-
णकनवनीतमेव आज्यपदलक्षिततत्कार्योद्देशेन द्रव्यतया पक्षद्वय-
रूपाज्यप्रत्याम्नायेन विधीयत इति न्यायसुधाकृतोक्तम्। तदाज्यपदे
सांप्रतिकलक्षणापत्तेस्तदपेक्षया आनुशासनिकनिरूढलक्षणापादक-
बहुव्रीह्यङ्गीकारस्यैव न्याय्यत्वादुपेक्षितम्। यदि तु किञ्चिद्गम-
कान्तरं भवेत्तदा तदेवास्तु ॥२॥१४७॥

आधाने ॥ सर्वत्र धर्माणामनारभ्याधीतप्राकरणिकसाधारण्येना-
पूर्वोपकारे एवान्वयात्पवमानेष्ट्यादीनामपि च स्वेनापूर्वोपकारकत्वा-
त्तत्रापि इतिनवनीतमिति प्राप्ते।

यदुपकारकता वैधप्रमाणप्रमिता तदुपकारके एव धर्माणां
निवेशः। न त्वर्थसमाजग्रस्तोपकारकत्वेऽपि। स्वेनोपकारकयजमा-
नाज्यभोजनादावपि इतिनवनीतत्वापत्तेः। न चाधानादेः स्वेनोप-
कारकत्वं शास्त्रप्रमितम्। अग्निमात्रार्थत्वस्यैव तत्प्रमितत्वात्। अतः
श्येनप्रयोगवर्त्तितदुपकारकाज्ये एव तन्निवेशः ॥२॥१४८॥

तत्काले वा ॥ एवं चेत्सुत्याकाले एव श्येनवैशेषिकाणां सह
पशुनालभत इत्यादीनां दर्शनाद् इतिनवनीतत्वस्यापि सुत्याकाला-
ज्याङ्ग एव निवेश इति प्राप्ते।

सामान्यतोदृष्टेन वाक्यसङ्कोचायोगात्सर्वार्थत्वम्। न हि पशु-
साहित्यस्यापि सुत्याकाले स्वेनाङ्गत्वं प्रयोजकं, अपि तु प्रधान-
प्रत्यासत्ति-तुल्यकालोत्कर्ष-वाक्याबाधरूपहेतुत्रयम्। न चात्र तदस्ति।
अतः सर्वार्थतैव ॥२॥१४९॥

मांसन्तु ॥ षट्त्रिंशद्वार्षिके शाक्यानामयनाख्ये सत्रे, संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति तत्र यान् मृगान् हन्ति तेषान्तरसाः सवनीयाः पुरोडाशाभवन्तीति श्रुतम्। मांसं भवतीति विधिना प्रत्यासन्नत्वात् पुरोडाशस्य तदुद्देशेनैव विधीयते । विधेरेव हि प्रवर्त्तनार्थं भावनाभाव्यसाकाङ्क्षत्वम् । अतस्तत्प्रत्यासन्नस्यैव तदुचितं, न सवनीयानाम् । यदा तु पुरोडाशाः सवनीया इति भवदेवादिमतः पाठस्तदा प्राथमिकत्वाद्विधेयतरसप्रत्यासन्नत्वाच्च पुरोडाशकार्यस्यैवोद्देश्यत्वं स्पष्टमेव ।

न च पुरोडाशस्य सवनीयपदेन विशेषणम् । विशिष्टोद्देशापत्तेः । अतः सर्वपुरोडाशकार्ये तरसं विधीयते । सवनीयपदन्तु सवनीयासवनीयपुरोडाशमात्रे गौणं लाक्षणिकं वा । अतः पुरोडाशमात्रे तरसञ्च धानाद्यादिस्थाने इति प्राप्ते ।

सवनीयपदवत् पुरोडाशपदेऽपि कार्यलक्षणापत्तेः प्राथमिकसवनीयपदमेव सवनीययागोद्देश्यतापरम् । प्रथमायास्तु द्वितीयार्थे लक्षणा उभयवादिसिद्धैव । अतः सवनीययागोद्देशेनैव धानादिपशुकबाधेन तरसं विधीयते । पुरोळाशपदं लेकं जघन्यत्त्व पुरोडाशवत्त्वसम्बन्धेन सवनीययागेषु लाक्षणिकमनुवादः । दृष्टश्च पुरोडाशानलङ्कुर्वित्यादौ पुरोडाशशब्दः सवनीयहविःपर इति तस्य सवनीययागलक्षकत्वं सुकरमेव । तदेवं श्रुत्यादिषट्प्रमाणकमङ्गत्वं निरूपितम् । अतः परं प्रयोज्यत्वं निरूपयिष्यते ॥३॥१५०॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

तृतीयस्याष्टमः पादोऽध्यायश्च ॥

श्रीगणेशाय नमः ।

# अथ चतुर्थोऽध्यायः ।

## प्रथमः पादः ।

अथातः क्रत्वर्थं ॥ एवं सिद्धे शेषिनिरूपिते शेषत्वे प्रयोजकनिरूपितं प्रयोज्यत्वमिह निरूप्यते । तच्च परोद्देशप्रवृत्तकृतिव्याप्यत्वम् । कृतिव्याप्यत्वञ्चानुष्ठाप्यत्वरूपं कालादिव्यावृत्तं वाजपेयाधिकरणे कौस्तुभ एव निरूपितम् । अतश्च कालादेः कृतिकारकत्वघटिताङ्गत्वसत्त्वेऽपि प्रयोज्यत्वाभावः । अङ्गत्वाच्च प्रयोज्यत्वस्य भेदः ।

तेन यदुद्देशप्रवृत्तकृतिव्याप्यत्वं यस्य, तत्तत्प्रयोज्यम् । यथा दध्यानयनप्रयाजा आमिक्षादर्शपूर्णमासादेः । यन्निष्ठकृतिव्याप्यतानिरूपितोद्देश्यताशालि यत्तत्तस्य प्रयोजकम् । यथाऽऽमिक्षादर्शादि दध्यानयनादेः । उद्देश्यता चात्रानुपादेयपञ्चकसाधारणी ग्राह्या । तेन कालनिमित्तादेः प्रयोजकत्वाविघातः ।

यद्यपि विधिरेव सर्वत्रानुष्ठापकः । प्रवर्त्तनारूपत्वात् । प्रवर्त्तनारूपो हि विधिरिष्टसाधनत्वमिव कृतिसाध्यत्वापरपर्यायप्रयोज्यत्वमपि विषयस्याक्षिपतीति भवति प्रयोजकः । तथापि स यदुद्देशेन प्रयोजयति तस्यापि प्रयोजकत्वव्यवहारः शास्त्रे ।

अत्र च यद्यपि न प्रयोज्यत्वावच्छेदेन तन्निरूपणं प्रति शेषत्वनिरूपणस्य हेतुत्वम् । निमित्ताद्यङ्गत्वाभावेऽपि नैमित्तिकस्य तत्प्रयोज्यत्वेनाङ्गत्वे व्यापकत्वस्यैव पुरोडाशकपालादेस्तुषोपवापं प्रति

कारकत्वेनाङ्गत्वसत्त्वेऽपि तत्प्रयोज्यभावेन व्याप्यत्वस्याप्यभावात् । अतो-नावच्छेदकावच्छेदेन हेतुहेतुमद्भावः । तथापि क्वचिद्द्व्यानयनादि-निष्ठप्रयोज्यत्वनिरूपणे तन्निष्ठशेषत्वनिरूपणस्योपयोगात् सामानाधि-करण्येन तन्निरूपणं प्रति अङ्गत्वनिरूपणस्य हेतुत्वात् सङ्गत्युपपत्तिः ।

अत्र प्रयोज्यत्वं, क्वचित्क्रत्वर्थपुरुषार्थविचारद्वारेण निरूप्यते, क्वचि-दन्यद्वारेण, क्वचित्साक्षादेवेति प्रयोज्यत्वमेवाध्यायार्थः । क्रत्वर्थपुरुषार्थ-त्वन्तु तृतीयसिद्धमपि उदाहरणविशेषनिष्ठतया प्रयोज्यत्वसिद्ध्यर्थं विचार्यत इति विवेकः ॥४॥१॥१॥

यस्मिन् ॥ वक्ष्यमाणयोः क्रत्वर्थपुरुषार्थयोर्लक्षणमुच्यते । तत्र तन्त्ररत्ने तावत्स्वयं प्रार्थितसाध्याधीनानुष्ठानः पुरुषार्थस्तदुपकारार्थः क्रत्वर्थ इत्युक्तम् ।

तन्न, फले काम्यकालादौ न कलञ्जं भक्षयेदित्यादिनिषेधेषु चाव्याप्तेः । अनुष्ठेयत्वाभावात् । निषेधेषु स्वयं प्रार्थितसाध्याप्रसिद्धेश्च । क्रत्वर्थलक्षणे आधानादावतिव्याप्तेश्च ।

यदपि शास्त्रदीपिकायामितिकर्त्तव्यतात्वेनान्वितत्वं क्रत्वर्थत्वं तद्भिन्नत्वं करणफलवृत्ति पुरुषार्थत्वमित्युक्तम् । तदपि न, क्रत्वर्थ-निषेधानामक्रियात्वेनानितिकर्त्तव्यतात्वेन तेष्वव्याप्तेः । आधानाध्य-यनयोरुभयभिन्नतया तन्त्ररत्ने त्वदुक्तत्वेन* तच्च पुरुषार्थलक्षण-स्यातिव्याप्तेश्च ।

तस्मात् स्वयं प्रार्थितवृत्त्युद्देश्यतानिरूपितविधिविषयताकत्वं पुरुषार्थत्वम् । स्वयं प्रार्थितत्वञ्च शास्त्रानधीनेष्टसाधनताज्ञानजन्ये-

* इत्यमेव पाठः सर्व्वत्र । तदुक्तत्वेन, इति तु प्रतिभाति ।

च्छाविषयत्वम्। स्वर्गे काम्यादौ हि इष्टसाधनता न शास्त्रगम्या। इदञ्च स्वर्गस्य देशविशेषरूपत्वे। सुखविशेषरूपत्वे तु शास्त्राधीनेष्टसाधनताज्ञानाजन्येच्छाविषयत्वं बोध्यम्। यागक्रतूपकारादौ तु शास्त्रगम्येति। तेन स्वयं प्रार्थिताः स्वर्गादयस्तु तथा। अतस्तदुद्देशेन विधीयमानं यागादि भवति पुरुषार्थम्। फलस्य च पुरुषार्थत्वव्यवहारो भाक्त इत्युक्तमेव फलं पुरुषार्थत्वादित्यत्र।

उद्देश्यताविधेयते च स्वरूपसम्बन्धविशेषात्मिके लक्षणघटके न तु साध्यत्वानुष्ठेयत्वात्मिके। तेन निषेधस्थले नरकाभावोद्देशेन निवृत्तिविधानात्फलोद्देशेन च काम्यविधानान्नाव्याप्तिः। पुरुषार्थेष्वभ्यनुज्ञाविधिषु च दोषाभावोद्देशेन तत्तत्क्रियाविधानान्नाव्याप्तिः। एवञ्च स्वयं प्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयताकत्वमेवेह क्रत्वर्थत्वम्। क्रतुशब्दो ह्यस्मिन् प्रकरणे स्वयमप्रार्थितपरः। तेनाधानाध्ययनयोर्ज्योतिष्टोमाद्यर्थत्वाभावेऽपि तादृशाग्न्यर्थज्ञानार्थत्वात्क्रत्वर्थत्वोपपत्तिः।

क्रत्वर्थनिषेधेषु चोक्तविधया क्रतुवैगुण्यपरिहारोद्देशेन निवृत्तेर्विधेयत्वान्नाव्याप्तिः। नातिरात्र इत्यादौ तु क्रतुसाद्गुण्यस्याङ्गान्तरजन्यत्वेऽपि षोडशिग्रहणाभावं प्रत्युद्देश्यत्वाविघातान्न सा। एवं क्रत्वर्थाभ्यनुज्ञाविधिष्वपीति सर्वं समञ्जसम्।

यद्वा, नानेन लक्षणकरणम्। अपि तु फलस्यापीतरांशवद्भावनाविशेषणत्वाद्विधेयत्वम्। न ह्यन्यांशयोरपि विशेषणत्वातिरिक्तं विधेयत्वम्। यदि तु विशिष्टभावनाविधावर्थादितरांशयोर्विधिरित्युच्येत, तत्फलस्याप्यविशिष्टमिति प्राप्ते।

विशिष्टभावनाविधाने आर्थिकविशेषणविधेरावश्यकत्वात्फलस्य च

यदंशे अप्राप्तिस्तदंश एव कल्पनात् फलस्य च रागप्राप्तत्वेन तत्कल्पने प्रमाणाभावादविधेयत्वम् । प्रयोजनं, पूर्वपक्षे श्येनफलस्याभिचारस्य विधेयत्वान्निषेधाविषयत्वम् । सिद्धान्ते तु रागप्राप्तत्वाद्धिं-सात्वादिति निषेधविषयत्वम् ।

न च हिंसाशब्दस्य मरणानुकूलव्यापारवाचित्वात्तस्य च वैरि-मरणाख्याभिचारफलकश्येनरूपस्य विहितत्वात्कथं निषेधविषयत्व-मिति वाच्यम् । अभिचरन् यजेतेति सामानाधिकरण्याच्छ्येन-समानकर्तृत्वावगतेरभिचारपदस्य मरणानुकूलश्येनकर्तृनिष्ठविषदा-नादिव्यापारवाचित्वावगतेस्तस्यैव श्येनफलत्वावसायाद्रागप्राप्तस्य तस्य निषेधविषयत्वोपपत्तेः । एवञ्चावश्यं श्येनेन विषदानाद्युत्पत्तिस्तेन वैरिमरणम् । न तु श्येनेनैव साक्षादिति ध्येयम् ।

यत्तु वैरिनिष्ठो मरणानुकूलव्यापार एवाभिचारपदार्थः । तत्र च यजमानस्य श्येनद्वारा प्रयोजककर्तृत्वमिति तस्य निषेधाविषयत्वेऽपि यजमानस्य पापोपपत्तिरिति केनचिदुक्तम् । तत् श्येनस्यैव तथा सति प्रयोजकव्यापारत्वात्तस्य च विहितत्वात्तत्कर्तृत्वेन यजमाने पापोत्पत्त्यनुपपत्तेरुपेक्षितम् । यत्र तु वैरिमरणकामो यजेतेति श्रुतं, तत्र वैरिमरणानुकूलकर्तृनिष्ठलौकिकव्यापाराभावेऽपि वैरि-मरणरूपपरानिष्टचिन्तनादेव पापमिति ध्येयम् । अभिचारार्थ-कर्मणस्तामसधर्मत्वस्मरणाद्वा तथा । प्रकृतेऽपि तथैव वाऽस्तु ।

यद्वा गोदोहनादीनां षष्ठीश्रुत्या पुरुषार्थत्वावगमेऽपि प्रकरणात् क्रत्वङ्गत्वम् । इतरथा, प्रणयनस्य चमसलोपेनाङ्गाभावाद्वैगुण्यापत्त्या विगुणप्रणयनाश्रिताद्गुणादपि फलानापत्तेः । अत उपजीव्यत्वाद्-दुर्बलमपि प्रकरणं विनियोजकम् ।

अथ वा षष्ठीसम्बन्धमात्रवाचिनी द्वीपादिन्यायेन सार्वकाम्य-
वाक्यप्राप्तपशुप्रयोजकप्रणयनजनकत्वसम्बन्धेनैव प्रकरणानुरोधेन पशू-
द्देशेन गोदोहनं विधत्ते। न तु साक्षादिति प्राप्ते।

दुर्बलप्रकरणानुरोधेन परम्परासम्बन्धाङ्गीकारे प्रमाणाभावा-
द्वीपादिवन्नियमविधिलाघवाभावाच्च साक्षादेवोद्देश्यत्वं पशूनाम्।
प्रणयनवैगुण्यस्य च परप्रयुक्तगोदोहनजन्योपकारमात्रोपजीवनेन
प्रणयनस्य तत्प्रयोगे अनङ्गत्वमसाधाद्दितया अनाम्नातत्वात्पुरुषार्थत्व-
मेव तस्येति पशुप्रयुक्तमेव गोदोहनमिति स्वतन्त्रपश्वकामनायामेव
कर्त्तव्यम्।

यत्तु भाष्यकारादिभिर्ब्राह्मणः प्रतिग्रहादिना द्रव्यमर्जयेज्जया-
दिना राजन्य इत्यादिविधिमुदाहृत्यानारभ्याधीतस्यापि प्रतिग्रहा-
दिनियमस्य फलकल्पनाभिया क्रत्वर्थत्वावधारणात् तादृशविशिष्टोपा-
यार्जितद्रव्यमपि सर्वं क्रत्वर्थमेव। अत एवाव्यभिचरितहिरण्यादि-
सम्बन्धात् तत्क्रयण्यादीनामपि क्रत्वर्थत्वसिद्धिरिति पूर्वपक्षयित्वा।
श्रुत्याद्यभावाददृष्टकल्पनस्य च क्रत्वर्थत्वपक्षेऽपि तुल्यत्वान्नियमस्य
क्रत्वर्थत्वानुपपत्तेरर्जनस्य च रागप्राप्तत्वेनाविधेयत्वात् तदर्जितद्रव्यस्य
दृष्टार्थत्वादिहितविहितसाधारणपुरुषकृत्यमात्रशेषत्वमेव। इतरथा
जीवनपरिलोपात् सर्वतन्त्रपरिलोपापत्तेः। किञ्च द्रव्यार्जनरूपा-
र्थोपक्रमेण सर्वक्रतूनामुपक्रमाद्यो दर्शपूर्णमासयाजी अमावास्यां
वा पौर्णमासीं वाऽतिपातयेदित्यनारभ्यपातिपातनदर्शनानुपपत्तिः।
अतो द्रव्यार्जनं तावत्पुरुषार्थम्। नियमोऽप्यदृष्टार्थत्वेऽपि पुरुषार्थ-
एव। एवञ्च चामवत्यादयोऽपि पुरुषार्था एव। क्रत्वर्थत्वे प्रमाणा-

भावादिति सिद्धान्तितम्। तत्प्रतिग्रहस्य फलकल्पनाभिया क्रत्वर्थत्वे हिरण्यधारणादेरपि तदर्थत्वापत्तेस्तेन गतार्थत्वाच्चोपेक्षितम्।

किञ्च नियमस्य क्रत्वर्थत्वेन श्रुतिवचनादिवत्तदर्जितद्रव्यस्य क्रत्वर्थत्वेऽपि भोजनाद्यर्थमनियतद्रव्योपायाक्षेपप्रतिबन्धे प्रमाणाभावाच्च सर्वस्य द्रव्यस्य क्षामवत्यादीनां वा क्रत्वङ्गता। अत एव सिद्धान्ते जीवनस्योपाद्यापादनमसंङ्गतम्।

किञ्चास्तु वा तत्। तथाप्यतिपातनस्यानारम्भकत्वे प्रमाणाभावाद्यागाकरणस्यासमापनस्यैव वाऽतिपातनत्वाङ्गीकारेण तद्दर्शनोपपत्तिः। अनारम्भकत्वेऽपि वा द्रव्यार्जनस्य प्रयोगबहिर्भूताङ्गत्वाङ्गीकारेण प्रयोगान्तःपातेऽपि वा श्रुतिवननप्रयाजादिवदेव प्रतिप्रयोगावृत्त्यङ्गीकारेणातिपातनदर्शने न काचिदनुपपत्तिः।

वस्तुतस्तु नायं प्रतिग्रहादिनियमविधिः। फलकल्पनापत्तेः।

प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत्।

इति तस्य पापजनकत्वश्रुतेश्च। नापि प्रतिग्रहाद्यतिरिक्तोपायान्तरपरिसंख्या। चौर्यादीनां सर्वसाधारणप्रतिषेधेनैव परिसंख्यातत्वात्। शिलोञ्छदायादीनां(१) मुख्यवृत्तित्वेन परिसंख्यानुपपत्तेश्च। अथवाणिज्यादीनां ब्राह्मणपुरस्कारेणापद्वृत्तित्वविधानादेवानापदि प्रतिषेधाच्च। अतो ब्राह्मणस्य प्रतिग्रहविधिर्दायशिलोञ्छाद्यसम्भवे दोषाभावमात्रबोधकतयाऽभ्यनुज्ञाविधिरेव। दायशिलोञ्छादीनां

(१) क्षेत्रे निपतितानां धान्यानामनेकैकगुच्छिकोच्चयनं शिलम्। तेषामेव मञ्जर्युच्चयनमुञ्छः। पित्रादिसकाशादागतं धनं दायः।

प्रतिषिद्धत्वाभावान्मुख्यवृत्तित्वमेव । सोऽपि च चौर्य्याणि कर्म्माणि जीवि-केत्यादिवचनात्प्रकरणाद्यभावाच्च पुरुषार्थः ।

न्यायागतेन द्रव्येण कुर्यात् कर्म्माणि वै द्विजः ।
अन्यायोपगतं द्रव्यं गृहीत्वा यो ह्यपण्डितः ॥
धर्म्माकाङ्क्षी तु यजते न धर्म्मफलमश्नुते ।

इत्यादिवचनैस्तु मुख्यगौणसाधारणवृत्त्युपायानामधिकारितार-तम्येन क्रत्वर्थस्यापि बोधनात् संयोगपृथक्त्वन्यायेनोभयार्थत्वेऽपि न दोषः । यदि तु शिलोञ्छादेः क्वचित्फलश्रवणं भवेत्, तदा जीव-नाश्रितयावज्जीवशिलोञ्छनियमस्यैव फलजनकत्वं बोध्यं, न तु प्रति-ग्रहस्येति व्यर्थोऽयं विचारः । कृत्वाचिन्तात्वेन वा बोध्यः ॥४॥१॥२॥

तदुत्सर्गे ॥ तस्य व्रतमित्युपक्रम्य,

नेक्षेतोद्यन्तमादित्यमस्तं यन्तं कदाचन ।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥

इत्यादि प्रजापतिव्रतं श्रुतम् । तत्रापि भाष्यकारादिभिः प्रति-षेधत्वे पर्य्युदासत्वे वोभयथापि फलकल्पनादिभिया क्रत्वर्थत्वमा-शङ्क्य, अनारभ्याधीतत्वात्क्रत्वाद्यभावेन च क्रत्वर्थत्वानुपपत्तेः पर्य्यु-दासत्वमङ्गीकृत्य पुरुषार्थत्वं सिद्धान्तितम् । तदपि कलञ्जभक्षण-प्रतिषेधहिरण्यधारणन्यायेन क्रत्वर्थत्वशङ्कानुपपत्तेरुपेक्षितम् ।

विचारस्त्वयमेवात्र कर्त्तव्यः । किमयं प्रतिषेधः पर्य्युदासो वेति । सिद्धान्ते त्वार्थवादिकफलप्रयुक्तत्वात् प्रतिषेधपक्षे च तद-भावात् सङ्गत्युपपत्तिः । तत्र नञः प्रधानान्वयव्युत्पत्तेर्धात्वर्थोद्दे-श्यत्व लक्षणाभियाऽनुपपत्तेः पर्य्युदासत्वायोगाद्रागप्राप्तेोद्यदादित्ये-

क्षणभावनायाः प्रतिषेध एवायं पुरुषार्थः कलञ्जभक्षणादिप्रति-षेधवत् ।

अतश्च निषेधेनेक्षणस्यानिष्टसाधनत्वाक्षेपेऽपि फलान्तराकाङ्क्षा-भावान्नैतावता ह्येनसा युक्तो भवतीत्याद्यार्थवादिकाघक्षयफलकल्प-नानुपपत्तेर्नार्थवादिकफलप्रयुक्तत्वम् । अर्थवादस्त्वीक्षणजन्यप्रत्यवाया-भावबोधनद्वारा ईक्षणनिन्देति प्राप्ते ।

तस्य व्रतमिति व्रतशब्देनोपक्रमस्थेनानुष्ठेयक्रियाप्रतिपादनात् तदनुरोधेनोपसंहारस्थो निषेधोऽप्यनुष्ठेयामेव क्रियां विधत्ते । अत-एव नञ्-ईक्षतिभ्यामीक्षणाभावसंकल्परूपा क्रियैव लक्षणया विधी-यते । मानससंकल्पस्य प्रवृत्त्यविनाभूतत्वात् । ईक्षतिरेव वा लक्षको-नञ्पदं तात्पर्यग्राहकम् । न चैवमुद्यदादित्यस्य पदार्थैकदेशे ईक्षणे-ऽन्वयानापत्तिः । कारकाणां प्रथमतो भावनान्वयस्यैव स्वीकारेणै-कदेशेऽन्वयाप्रसक्तेः । यन्मते हि सोमादीनां प्रथमत एव धात्वर्थे-ऽन्वयस्तन्मते एवेदं दूषणं न त्वस्मन्मते । अतोऽनीप्सितकर्मत्वेन समनुवलक्षितकरणत्वेनैव वा भावनान्वयः । पार्ष्टिकान्वये तु समस्त-पदघटितवाक्यस्यैव कल्पनान्न कोऽपि दोषः ।

अतस्तादित्येक्षणाभावसंकल्पभावनैवोदये निमित्ते विधीयते । षमुनादिवच्छतृप्रत्ययेन निमित्तत्वाभिधानात् । तत्फलञ्चार्थवादि-काघक्षयः । अतः सिद्धं भावनाभिन्ने नञः सम्बन्धात्पर्युदासः, स च फलप्रयुक्त इति ।

नन्वेवमपि नञोभेदवाचित्वस्य तदन्य-तद्विरुद्ध-तदभावेषु नञ् इति प्रसिद्धेस्तत्पदेनैव सम्बन्धाङ्गीकारादुद्यन्नादित्येक्षण-

श्चैवाम्नायफलकत्वेन विधानोपपत्तेर्न संकल्पलक्षणा । न च सुबन्त-सम्बन्धेन नञः समासापत्तिः । नानुयाजेष्वितिवदुपपत्तेः । न च नञ-स्यादित्यपदेन वा सम्बन्धः उद्यत्पदेन वेत्यत्र विनिगमकाभावः । विशेष्यसाकाङ्क्षत्वस्यैव विनिगमकस्य सत्त्वादिति चेत् ।

तथात्वेऽपि नोद्यन्तमिति सुबन्तपदस्य निपातान्वयव्युत्पत्त्यभावेन उद्यद्भिन्नेऽपि पदद्वयलक्षणाया आवश्यकत्वात् । तथात्वे स्वभावेनैव तादृशादित्येक्षणस्य सर्वदा जायमानत्वेनाशक्यतोपपत्तेर्विधिवैफल्यात् । स्वरसतः प्रतीयमाननिषेधस्य संकल्पलक्षणयाऽप्यपरित्यागेन भवदुक्त-पर्युदासानुपपत्तेश्च । अस्मिन्नुदाहरणे तथाङ्गीकारेऽपि न वारिस्थ-मित्यत्रैकादश्यां न भुञ्जीतेत्यादौ च संकल्पलक्षणाया आवश्यकत्वाच्च । प्रयोजनं स्पष्टम् । सूत्राण्यप्यस्मिन्नेव विचारे सुधीभिर्योज्यानि ॥ ४॥१॥२॥

द्रव्याणि ॥ स्फ्यश्चेत्याद्युपक्रम्य श्रुतस्य यज्ञायुधवाक्यस्य तृतीये उदाहृतस्यैव साक्षात्प्रधानभूताग्नेयाद्युद्देशेनोत्पत्तिवाक्याविहितद्रव्य-कोपांशुयाजोद्देशेनैव वा स्फ्यादिद्रव्यविधायकत्वम् । इतरथा समस्त-वाक्यवैयर्थ्यापत्तेः । यज्ञशब्दस्य तत्साधनोद्धननादिलक्षकत्वापत्तेश्च । तस्मादुद्धननादिवाक्यैः स्फ्यादीनामुद्धननाद्यर्थत्वेऽप्यनेन सह वि-कल्पेनोपांशुयाजार्थत्वमपीति प्राप्ते ।

प्रकरणविध्येकवाक्यत्वादस्य तदर्थवादत्वेनाप्युपपत्तेः अनन्यशेष-भूतेन सर्वस्मै वेति वाक्येन विहितस्याज्यस्य पाक्षिकत्वापादकत्वा-नुपपत्तेरुद्धननादिक्रियाभेदेऽपि च दशत्वस्य प्रकरणरूपैकक्रिया-सम्बन्धादेवोपपत्तेरायुधशब्दस्य प्रयोजकत्वलक्षणयाऽप्युपपत्तौ साधन-

त्वकत्वाभावाद्यग्रब्देऽपि तदनापत्तेर्नैतस्य स्फ्यादिविधायकत्वम्। तदेतदर्थवादत्वस्य तृतीयसिद्धत्वेन पूर्वपक्षोत्थानाभावेऽपि प्रसक्तस्थितार्थमुक्तमिति द्रष्टव्यम्।

यत्तु भाष्यादिभिः सिद्धमुक्तं स्फ्याद्याकारस्य द्रव्यदानेन विकल्पत्वात् पूर्वपक्षे परिधानीये कर्मणि आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति यज्ञपात्रकरणकदाहानुपपत्तिरिति। तत्पूर्वपक्षे उद्धननाद्यर्थपात्राणां पृथक्सत्त्वात्तेषाञ्च यज्ञसाधनत्वाभावेऽप्यायुधशब्दाभावेन प्रयोजकतयैव यज्ञपात्रत्वोपपत्त्या दाहोपपत्तेरुपेक्षणीयम्॥ ४॥२॥४॥

तथैकत्वं॥ पशुना यजेतेत्यादौ यत्रोपादेयपश्वादिगता संख्या विभक्त्युपात्ता सा किं विवक्षिता न वेति चिन्तायाम्। सत्त्वप्रधानानि नामानीति स्मृत्या प्रातिपदिकार्थस्य पश्वादेर्विभक्त्युपात्तसंख्याविशेष्यत्वरूपसत्त्वसमाख्यया विभक्त्युपात्तसंख्यायाः प्रातिपदिकार्थं प्रति पदश्रुत्या योग्यतारूपलिङ्गेन च विशेषणत्वावगमादाख्यातक्रियान्वयानुपपत्तेस्तदभावेऽपि क्रियाया अवैगुण्याच्च विवक्षिता संख्या।

न चैकत्वादेः पश्वन्वयेऽपि तद्विशिष्टस्यैव पशोः कारकान्वयद्वारा क्रियासम्बन्धाल्लोहितोष्णीषादिवत्पशुविशेषणस्यापि विवक्षोपपत्तिः। संख्याकरणत्वयोर्विभक्त्या युगपदुपादानेन संख्यायाः प्रथमतः पश्वन्वयमभिधाय पश्चाद्विशिष्टस्य पशोः कारकान्वयाभिधाने विरम्य व्यापारतापत्तेः। न च त्वयापि संख्यायाः पदश्रुत्या पश्वन्वयाङ्गीकाराद्युगपदन्वयद्वयस्य शाब्दबोधस्य च विरुद्धत्वात् प्रथमतः शुद्धस्य पशोः कारकान्वयमङ्गीकृत्य पश्चात्संख्यायाः पश्वन्वयाङ्गीकारे तवापि

विरम्यव्यापारतापत्तिरिति वाच्यम्। तथापि भावनान्वितकारक-विशेषणविशेषणस्यासमस्तपदस्थले भावनान्वयव्युत्पत्त्यभावेनाविवक्षोप-पत्तेः। इतरथाऽऽरुण्यस्याप्यानुशासनिकमत्वर्थलक्षणया एकहायनीं प्रत्येव विशेषणत्वोपपत्तौ प्रथमतः क्रियान्वयमभ्युपगम्य पार्ष्ठिकैक-हायनीसम्बन्धसिद्धान्तभङ्गापत्तेः।

अत्र च लौहित्यादेर्भावनान्वितकारकविशेषणविशेषणत्वेऽपि समस्तपदत्वान्न क्षतिः। वारवन्तीयादेस्तु कृत्वा-शब्दोक्तभावनायामे-वान्वय इति न कापि क्षतिः। अत एव सोमारुण्यादीनामपि न प्राथमिको धात्वर्थान्वयोऽपि तु भावनान्वय एवेत्युक्तं तत्र तत्र।

किञ्च न प्रत्ययार्थस्यैकत्वस्य प्रकृत्यर्थं पशुं प्रति प्रकारता। प्रत्ययार्थप्राधान्यभङ्गापत्तेः। अपि तु पशोरिव करणत्वं प्रतीवैकत्वं प्रत्यपि प्रकारता। अतस्तैकत्वस्य करणत्ववद्विधेयभावनायामप्रकार-त्वादविवक्षेति प्राप्ते।

पशोः करणत्व एवान्वयो न त्वेकत्वेऽपि, प्रमाणाभावात्। अतश्च पशोस्तद्द्वारा भावनान्वयवत् संख्याया अपि बलीयस्या समानाभि-धानश्रुत्या आधेयत्वेन सामानाधिकरण्येन वा प्रथमतः कारका-न्वयस्यैवाङ्गीकारात्पश्चाच्च पदश्रुत्यादिना आधारत्वसम्बन्धेन पश्व-न्वयोपपत्तेर्निरूढव्युत्पत्त्यैव संख्यायाभावनासम्बन्धित्वाद्विवक्षितत्वम्।

न चैवं यदि सोममपहरेयुरेकाङ्गां दक्षिणां दद्यादित्यादा-वेकपदवैयर्थ्यम्। गामित्यनेनैवैकत्वविधानोपपत्तेरिति वाच्यम्। एकत्वविधिवद्गोत्वविधेरपि प्राप्तदक्षिणाऽनुवादेन धेनुर्दक्षिणेति वत् विशिष्टकारकान्तरविधानेनापत्तौ द्वादशशतसंख्यावत्सामान्यविहिता-

श्वादीनामपि बाधप्रसङ्गात् तन्निवृत्त्या दानाश्रितस्यैव गोत्वस्योद्देशेन विधानार्थमेकग्रहणोपपत्तेः। अतो विवक्षितैव संख्या। अत एव कर्णायामा अवलिप्ता रौद्रा नभोरूपाः पार्जन्यास्तेषामैन्द्राग्नो दशम इति दशमत्वदर्शनमुपपन्नम् ॥४॥१॥५॥

तथा च ॥ भवतु संख्या शब्दार्थत्वाद्विवक्षिता। लिङ्गन्तु उपादेयगतमप्यशब्दार्थत्वादविवक्षितम्। न हि तत्प्रातिपदिकार्थः। सिंहादिपदात् तदप्रतीतेः। तस्य लिङ्गत्रयसाधारण्येन लिङ्गसामान्यव्यभिचाराच्च। नापि प्रत्ययार्थः। व्यभिचारादेव। नापि टादिस्त्विकाराणां तस्मात्क्षमेनः पुंसीत्यादीनाम्। विलिङ्गे वृक्षादौ विपरीतलिङ्गे वृक्षमक्षिकादौ च प्रयोगेण व्यभिचारादेव। अतः शब्दानुशासनमात्रमिदं, न लिङ्गं नाम कस्यचिच्छब्दस्यार्थ इत्यविवक्षितमिति प्राप्ते।

सिंहः तिष्ठतीत्यादावनन्यथासिद्धलिङ्गप्रतीतेर्लिङ्गमपि कचिट्टादिस्त्विकाराणां कचित्तिसृचतस्रादिप्रातिपदिकविकाराणां वाच्यम्। अतः सुबर्थत्वेन संख्यावत्, कचिच्च प्रातिपदिकार्थत्वेनैव विवक्षितम्। यत्र तु बाधस्तत्र साधुत्वार्थं तच्छब्दप्रयोगः ॥ ४॥१॥६॥

आश्रयिषु ॥ यजति जुहोतीति वा यत्र श्रुतं, तत्र यजेस्तावद्देवतोद्देशविशिष्टद्रव्यत्यागवाचित्वात्त्यागांशस्यादृष्टविधया आरादुपकारकत्वम्। उद्देशांशस्य त्वदृष्टविधया तदुपकारकत्वमेव। अतएवोद्देशाङ्गभूतदेवतायास्त्यागाङ्गभूतद्रव्यापेक्षया दुर्बलत्वम्। प्रक्षेपस्तु तत्र त्यागाङ्गद्रव्यसंस्कार एव। जुहोतिस्थले तदङ्गमेवादृष्टविधये-

तरौ। समप्रधानौ वा। अत एवोभयत्र मन्त्रस्तत्तदङ्गभूतदेवतादि-
प्रकाशनार्थ एवेति स्थितिः।

यत्र तु स्वाहाकारस्विष्टकृत्सूक्तवाकपशुपुरोडाशपिष्टलेपादि-
होमवाजिनेज्यादौ परकीयं द्रव्यं देवता वा प्रक्षेपांशेनोद्देशांशेन
मन्त्रेण वा संस्क्रियते। यथा स्वाहाकारसूक्तवाकपशुपुरोडाशादा-
वाग्नेयादिमन्त्रदेवतोद्देशाभ्यां स्विष्टकृति प्रक्षेपांशेन तदीयं द्रव्यं,
मन्त्रेणैव तदीयादेवताः। उद्देशांशस्य स्विष्टकृद्देवताकत्वात्। पिष्ट-
लेपादौ प्रक्षेपेण तदीयं द्रव्यमेव। सर्वत्र प्रमाणं तत्र तत्रोक्तं वक्ष्यते।
यस्तु तत्र त्यागांशः सोऽदृष्टार्थ एव। न च तस्य पदार्थैकदेशत्वा-
न्निष्प्रयोजनत्वेऽपि न क्षतिः। विहितपदार्थान्यथानुपपत्त्या तद-
वयवानामप्यर्थाद्विहितत्वेन प्रयोजनाकाङ्क्षोपपत्तेः। अतः सोऽप्यदृष्टार्थ-
एव सन्फलवत्प्रक्षेपाद्यङ्गं तत्संस्कार्यद्रव्याद्यङ्गमेव वेति तत्संस्कार्य-
द्रव्यदेवतादावेव प्रोक्षणादिवददृष्टं जनयतीति सन्निपत्त्योपकारक-
त्वमयुक्तमेवेति प्राप्ते।

विशेष्यतया गृहीतस्य त्यागांशस्य प्रक्षेपाद्यङ्गत्वे प्रमाणाभावा-
द्देवतादेश्च दृष्टमात्रापेक्षत्वेनादृष्टोपकारानपेक्षत्वात् प्रकरणात्त्यागां-
शस्यारादुपकारकत्वमेव प्रयाजादिवत्। तत्र त्वेतावान्विशेषः।
यत्परप्रयुक्तद्रव्यदेवतोपजीवि, तत्र परप्रयुक्त्यभावे स्वातन्त्र्येण तद्द्रव्य-
देवताऽऽक्षेपकम्।

अत एवैककपालस्य सर्वहोमे स्विष्टकृत्त्यागस्य लोप एव।
स्वोपकारकद्रव्यस्य नाशादिनिमित्ताभावेनान्येनापि समापना-
योगात्। चयनादावयागे वाचनिकप्रयाजादिविनियोगेऽपि च न

स्वाहाकारयागः । प्रकृतौ तु द्रव्यनाशे यस्य सर्वाणि हवींषि नश्ये-युर्भ्रश्येयुरपहरेयुर्वाऽऽज्येनैतादेवताः परिसंख्याय यजेतेति वचनादा-ज्येन समापनम् । सन्निपत्योपकारकत्वे तु संस्कार्याभावादिडादि-वल्लोप एवेति विशेषः ॥४॥१॥७॥

अर्थे ॥ एवं तावत्क्रत्वर्थपुरुषार्थविचारद्वारेण प्रयोजकत्वं चिन्तितम् । इदानीन्तु साक्षादेव तच्चिन्त्यते । तत्सिद्ध्यर्थस्तु काश्चित्को-ऽङ्गाङ्गिभावविचार इति सुखग्रहणार्थं प्रतिज्ञामात्रमिदम् ॥४॥१॥८॥

एकनिष्पत्तेः ॥ चातुर्मास्येषु प्रथमे पर्वणि तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति श्रुतम् । तत्र दध्यानयन-स्यामिक्षा वाजिनञ्चेत्युभयं प्रयोजकमुतामिक्षैवेति चिन्तायाम् ।

दध्यानयनवाक्ये तावत्तप्तपयोऽधिकरणकं दध्यानयनमात्रं श्रुतं न तु पयसो दध्नो वा प्राधान्यम् । सप्तम्या प्राधान्यानभिधानात् । तथात्वे उद्देश्यविशेषणत्वेन तापस्याविवक्षापत्तेश्च । न चानयतेर्द्विकर्मकत्वात् पयसो व्याप्यमानत्वेन दध्यपेक्षयाऽपि प्राधान्यावगतिः । द्विकर्मक-धातुस्थले हि अधिकरणत्वादिकारकान्तराविवक्षायां कर्मकारक-सम्बन्धमात्रविवक्षायाञ्च सम्बन्धसामान्ये षष्ठीप्राप्तौ अकथितञ्चेति सूत्रेण कर्मसंज्ञाकरणाद्द्वितीयाविधानावगतावपि प्राधान्ये प्रमाणा-भावात् । प्रकृते सप्तमीश्रवणेनाधिकरणत्वविवक्षावगतेर्द्वितीयकर्म-प्रसक्त्यभावाच्च ।

दध्नस्तूपयोगाभावादेव सक्तुवन्न प्राधान्यावगतिः । न ह्यामिक्षा नाम दधिपयोरूपा । रसघनीभावादिधर्मभेदेनार्थान्तरत्वात् । तस्यै शृतं तस्यै दधि तस्यै आमिक्षा तस्यै वाजिनमिति भेदेन

व्यपदेशाच्च । गोपयसोर्यदिति विकारवाचि-यत्प्रत्ययान्तपयस्याशब्द-पर्यायत्वाच्च । जुषतां युज्यं पय इति तु धान्यशब्दवद्विकारपरम् । अतश्च दध्यानयनस्य वाक्ये उद्देश्याभावात् सामर्थ्येन दधिसंसृष्टपयो-जन्यामिक्षार्थत्वाङ्गीकारे च जन्यत्वाविशेषेण वाजिनार्थत्वस्याप्यवगतेः उभयं प्रयोजकमिति प्राप्ते ।

सा वैश्वदेवीति सर्वनाम्नः प्रकृतपरामर्शित्वात् पूर्ववाक्ये यत्प्रा-धान्येन निर्दिष्टं तदामिक्षेत्यवधार्यते, न त्वर्थान्तरम् । रसश्च मधु-राम्लरूपयोस्तयोरेवावधार्यत इति न ततोऽप्यर्थान्तरम् । घनीभावस्तु पीयूषादिवदभेदेऽप्युपपन्न एव । पृथङ्निर्देशोऽप्यवस्थान्तरात् । विकारार्थ-यत्प्रत्ययस्मृतिरपि तच्छब्दाद्यनुरोधेनावस्थापरैव । तस्मा-दामिक्षाऽर्थान्तरमपि तु दधि पयो वा । तत्रापि विशेषनिर्णय-स्त्वष्टमेऽतिदेशसिद्ध्यर्थं निरूपयिष्यते ।

तत्सिद्धं स्ववाक्य एवामिक्षारूपोद्देश्यसम्बन्धित्वावगतेर्दध्यानयनं तत्प्रयुक्तमेव । न तु वाजिनप्रयुक्तम् । तस्य तच्छब्दाद्यभावेनार्था-न्तरत्वप्रतीतेः । तज्जन्यत्वेऽपि शेषित्वानवगमात् । अतश्च तस्यानु-निष्पन्नत्वात् तद्यागस्य स्विष्टकृदादिवदनुनिष्पन्नप्रतिपत्तित्वावगमेन परप्रयुक्तदध्यानयनोपजीवित्वावगतेर्न तत्प्रयोजकत्वं वाजिनस्य कल्प-नीयं गौरवात् ।

प्रयोजनं, पूर्वपक्षे वाजिनयागस्यार्थकर्मत्वेन समप्राधान्यापत्तेरा-मिक्षायागविकारेऽनतिदेशः, सिद्धान्ते त्वनुनिष्पन्नप्रतिपत्तित्वेना-मिक्षायागाङ्गत्वात् तद्विकारेऽतिदेशः ।

सोमेश्वरस्य तु सिद्धान्तेऽपि वाजिनयागे अर्थकर्मत्वं वदत-

आमिक्षाया आङ्गत्वानापत्तेस्तद्विकारेऽतिदेशो न सिध्येत्। अष्टौ हवींषीत्यस्य च विनिगमनाविरहेणावयुत्यानुवादत्वस्य त्वन्मते* आपत्तेः। यत्तु भाष्यकारादिभिः पूर्वपक्षे वाजिनलोपे आमिक्षानाश-इव पुनर्दध्यानयनेन वाजिनोत्पत्तिः. सिद्धान्ते त्वाज्येन समापनमिति प्रयोजनमुक्तम्। तत् षष्ठे हविर्नाशादिनिमित्ते आज्येन समापनस्य विधिबलेन वक्ष्यमाणत्वेन पूर्वपक्षेऽपि तुल्यत्वादुपेक्षितम्॥ ४। १॥ ९॥

पदकर्म॥ सोमक्रयार्थमेकहायनीं विधाय क्रयदेशे तन्नयने क्रियमाणे, तस्याः षट् पदान्यनुनिष्क्रामति सप्तमं पदं स्फ्येन लिखेत्। हिरण्यमन्तर्धाय पदे जुहोति। ततः सप्तमं पदमध्वर्यु-रञ्जलिना गृह्णाति। यर्हि हविर्धाने प्राची प्रवर्त्तयेयुस्तर्हि तेनाक्ष-मुपांज्यादिति श्रुतम्†।

तच्चाक्षाभ्यंजनमपि क्रयवदेवैकहायनीनयनस्य प्रयोजकम्। अन्यत्ववदङ्गित्वस्याप्युभयत्र समत्वात्। अक्षाभ्यञ्जने हि तच्छब्देनैव पदपांशवो निर्दिष्टा इति ते तदङ्गम्। पदस्य चैकहायनीनिरू-पितत्वम्, तस्याः सप्तमं पदमित्युनुषङ्गाच्छाखान्तरवचनाच्चावगत-मिति साऽपि तदङ्गम्।

अतस्तु नीयमानसंस्कारार्थस्य नयनस्याप्युभयार्थत्वादुभयप्रयोज्य-त्वम्। न च प्रकरणादेवैकहायनीलाभात् तच्छब्दस्यानुवादकत्वम्। प्रकरणप्राप्तेः पूर्वप्रवृत्त्यङ्गीकारेण प्रयोजकत्वफलकाङ्गत्वविध्युपपत्तेः। न च तथापि क्रयप्रयुक्तत्वविशिष्टैकहायन्या एव तच्छब्देन परामर्शात्

* तन्मते,—इति भवितुमुचितम्।

† तेनाक्षमञ्ज्यादिति,—। इति भाष्यधृत पाठः।

पुरोडाशकपालन्यायापत्तिः । तथात्वे फलाभावेन तच्छब्दवैयर्थ्या-पत्तेस्तस्यैकहायनीस्वरूपमात्रपरत्वाङ्गीकारादिति प्राप्ते ।

विधिगौरव-प्रयोजकशक्तिकल्पनागौरवाभ्यां तच्छब्दस्य पूर्व-परामर्शित्वस्वभावेनोपजीव्यप्रकरणप्राप्तानुवादकत्वावगतेश्चैकहायन्याः क्रयमात्राङ्गत्वावसायात् तदङ्गभूतनयनस्यापि तन्मात्रार्थत्वप्रतीते-रत्राभ्यञ्जनं पदहोमादिकं वा क्रयप्रयुक्तैकहायनीतन्नयनलाभेन चरितार्थं नैकहायन्यास्तन्नयनस्य वा प्रयोजकम् ।

अतश्चैकहायन्यां क्रयार्थं नीयमानायां दैवाद्धाव्णि सप्तमपद-पातेऽत्राभ्यञ्जनार्थं पुनर्न तदानयनम् । यथाशक्तिप्रयोगादौ क्रय-लोपेऽपि वा नैकहायनीप्रयुक्तिः । अत्राभ्यञ्जनार्थन्तु ये केचित्पांशवो-ग्राह्या एव । गुणलोपे मुख्यलोपानुपपत्तेः । होमस्तु आरादुपकार-कत्वाद्धाव्ण्येव । यथाशक्तिप्रयोगे त्वाहवनीये निरधिकरणक एव वेत्यन्यदेतत् ॥४॥१॥१०॥

अर्थाभिधान ॥ दर्शपूर्णमासयोः पुरोडाशकपालेन तुषानुपवप-तीति श्रुतम् । तच्च कपालस्य, कपालेषु पुरोडाशं अपयतीति अपणे विनियुक्तस्यापि तृतीयया तुषोपवापार्थत्वेनाप्यार्थिकविशेषण-विधिना विनियोगात् उभयप्रयुक्तत्वम् । न च पुरोडाशार्थकपाल-त्वेनैव तुषोपवापे विनियोगान्न तुषोपवापप्रयुक्तत्वम् । प्रकृतिविकार-भावाभावेन तादर्थ्यसमासायोगात् । षष्ठीसमासे च सम्बन्धमात्राव-गतेस्तस्य च कपालत्वेनैव विनियोगेऽपि पुरोडाशार्थोपात्तस्यैव प्रसङ्गेन ग्रहणोपपत्तेरनुवादकत्वात् ।

यदि तु प्रसङ्गलक्षणाभावादुपादेयत्वे प्रकृतग्रहणस्य च तानि

द्वैधमित्यत्र निराकृतत्वान्न पुरोडाशार्थकपालनियम इत्याशङ्क्येत, ततोऽस्तु नाम पुरोडाशसम्बन्धविशिष्टस्यैव विधानम्। तत्फलञ्च तद्भिन्नकपालव्यावृत्तिरेव न त्वप्रयोजकत्वमपि। सम्बन्धरूपाङ्गाभावेऽपि अग्निहोत्रहवणीन्यायेन प्रधानभूतकपालबाधानुपपत्तेस्सर्वादौ तन्नियमाभावरूपस्याप्रयोजकत्वफलस्यासम्भवादिति प्राप्ते।

पुरोडाशसम्बन्धस्य प्रमाणान्तरगम्यस्यालोचने तत्प्रयुक्तत्वस्याप्यवगतेर्न पुनस्तुषोपवापविधिरपि तत्प्रयुक्ते। अतो लाघवाद्वघातकालीनस्तुषोपवापः परप्रयुक्तकपालोपजीवितया न कपालोपादानाभादनयोः प्रयोजकः। निनयनकालीनस्तु कपालधारणस्य प्रयोजको भवत्येव। उपादानस्य तु सोऽप्यप्रयोजकः। प्रयोजनं, सर्वादौ न कपालनियमः। अग्निहोत्रहवण्यान्तु वक्ष्यते॥४।१।११॥

पश्चावनालम्भात्॥ पशौ, शकृत्सम्प्रविध्यति लोहितं निरस्यतीति श्रुतं निरसनं, पश्वालम्भस्य शकृल्लोहितस्यैव वा प्रयोजकम्। न ह्मीयं तस्य प्रतिपत्तिः। हृदयादीनामेव हविष्ट्वेन तस्यानुपयुक्तत्वादपूर्वसाधनत्वाभावाच्च। अतश्चार्थकर्मैवेदं शकृल्लोहितस्य तावत्प्रयोजकम्। पश्वालम्भोऽपि च विशसनवाक्ये श्रुतः प्रयोजनाकाङ्क्षः सन् हृदयादेरिव लोहितादेरपि पशुप्रकृतिकत्वमाक्षिपति। न हि हृदयादेस्तदुत्पत्तिवाक्याधीनम्। तस्य तदभावे हविष्ट्वेनैव तद्विधायकत्वात्। अतस्तत्रत्यपशुपदमपि देवतासम्बन्धसिद्ध्यर्थं वस्तुतोऽनुवाद एव।

अस्तु वोत्पत्तिवाक्यावगतं पशोर्यागसाधनत्वम्, विशसनवाक्यानुरोधात् हवीरूपहृदयादिप्रकृतित्वरूपमेवेति विशसनवाक्यस्यापि

तत्परत्वमेव । तथापि निरसनस्यार्थकर्मत्वाज्ज्ञापनीवल्लौकिकशक्त-स्लोहितप्रयोजकत्वे न किञ्चिद्बाधकमिति प्राप्ते ।

द्वितीयया निरसनस्य प्रकृतित्वावगमान्न लोहितादिप्रयोजकत्व-मपि । उपयुक्तत्वाभावेऽपि चानुनिष्पन्नत्वेन प्रतिपत्तिसापेक्षत्वात् परम्परयाऽपूर्वसम्बन्धस्य सत्त्वेन चानर्थक्याभावात् प्रतिपत्तिकर्मत्वोप-पत्तेः । प्रयोजनं, पशुलोहिताद्यभावनाशयोस्तल्लोपः । प्रायश्चित्तं परं तल्लोपनिमित्तं भवत्येव । सोमेश्वरलिखितरचोभागत्वसत्त्वे तु त्यागांशस्याज्येन येन केनचिद्वा द्रव्येण समापनं भवत्येवेति द्रष्टव्यम् ॥४॥१॥१२॥

एकदेश ॥ यच्चोत्तरार्द्धात् स्विष्टकृते समवद्यतीत्यादौ न द्वितीयादिनिर्देशस्तच्च प्रतिपत्तित्वे प्रमाणाभावादुपादानत्वेन श्रुत-स्योत्तरार्द्धस्य यागं प्रति गुणत्वादुत्तरार्द्धस्य तावद्यागः प्रयोजको भवत्येव । तस्य च ससम्बन्धिकत्वेन स्वप्रतिसम्बन्धियत्किञ्चिद्व-यवाक्षेपकत्वं सुलभमेव । न च प्रकृतपुरोडाशरूपावयवसत्त्वे न स्वतन्त्राक्षेपकत्वम् । प्रकृतस्य स्वकार्य्ये सर्वस्य विनियुक्तत्वेनान्यत्र विनियोगासम्भवात् । न च तस्य प्रतिपत्त्यपेक्षत्वात्प्रक्षेपांशेनास्य प्रतिपत्तिकर्मत्वम् । प्रक्षेपांशस्याग्नेयादिप्रक्षेपवत्स्वयागाङ्गत्वेनैव प्रयो-जनानपेक्षत्वात् । उत्तरार्द्धस्यांशभेदेनापि गुणत्वप्रधानत्वयोरङ्गी-कारे वैरूप्यप्रसङ्गाच्च । प्रधानमात्रत्वस्वीकारेऽपि लक्षणायास्तावद-निवारणाच्च । अतः स्विष्टकृद्यागोऽर्थकर्मैव प्रयाजादिवत्सनुत्तरार्द्ध-तदवयविनोः प्रयोजक इति प्राप्ते ।

यद्यपि तावदर्थकर्मैव स्यात्तथापि ससम्बन्धिकत्वात्प्रतिसम्बन्ध्यपे-

क्षायां यावत्प्रकृतप्रतिसम्बन्धित्वलाभस्तावन्नान्याक्षेपकत्वकम् । गौरवात् । अस्ति च प्रकृते प्रतिपत्त्यपेक्षः शेषः । अतस्तदुपजीवकत्वमेव । अत-एव शेषात्स्विष्टकृत इत्यपि लिङ्गमुपपद्यते । एवञ्चोत्तरार्द्धस्य त्यागं प्रति गुणत्वेन विनियुक्तस्यापि प्रधानगतप्रतिपत्त्यपेक्षानुरोधेन वाक्यान्तरकल्पनया प्रक्षेपांशं प्रति प्राधान्येऽपि न क्षतिः । श्रुतयाग-विधिनाऽपि धारणप्रयोजकत्वकल्पनाभिया तदनुपपत्तेश्च ।

अत एवानुमितप्रतिपत्तेरेव धारणप्रयोजकत्वादिकल्पना । दोषो नानुमिते ह्यसाविति न्यायात् । अनुमानस्य फलमुख-त्वाच्च । अत एव सर्वाणि हवींषि समवद्यतीति लिङ्गमपि प्राधान्या-दुपपन्नम् । अत एव स्विष्टकृत्प्रक्षेपोऽपि प्रधानाङ्गभूतस्तत्प्रयुक्तएव सन् स्विष्टकृत्त्यागस्याप्यङ्गं तत्प्रयुक्तश्च । प्रतिपाद्यत्वाविशेषात् । अतः स नावयविनो नोत्तरार्द्धस्य वा प्रयोजकः । आज्यप्रक्षेपस्य तु प्रयोजको भवत्येवेति सिद्धम् ॥ ४ ॥ १ ॥ १३ ॥

अभिघारणे ॥ दर्शपूर्णमासयोः, प्रयाजशेषेण हवींष्यभिघारय-तीति श्रुतम् ।

तत्र प्रयाजशेषोऽभिघारणस्य तृतीयाद्वितीयाभ्यामुपयुक्तसंस्कारा-पेक्षया चोपयोक्ष्यमाणसंस्कारस्याभ्यर्हितत्वाद्धविःसंस्कारकत्वमेव । न तु प्रयाजशेषप्रतिपत्त्यर्थत्वं, लक्षणाप्रसङ्गात् । न च हविःसंस्कार-कत्वे ऽदृष्टकल्पनापत्तेरपेक्षितदृष्टरूपप्रतिपत्त्यर्थत्वलाभाय लक्षणा-द्वयाङ्गीकरणमपि न दोषायेति मिश्रमतं युक्तम् । निषादस्थ-पत्यधिकरणन्यायेनादृष्टकल्पनादेः फलमुखत्वात् । किञ्च द्वितीयायाः सप्तम्यर्थत्वचकत्वे हविषामभिघारणं प्रत्युपादेयत्वापत्तेस्तद्गतबहुत्वस्य

विवचापत्तौ चिद्वेव करणापत्तिः। तथा च यद्दैकत्वाधिकरणे तदविवचाऽभिधानं वार्त्तिककारीयं नोपपद्येत।

यत्तु अभिघारणं प्रत्याधारत्वेनान्वितानामपि हविषामाधारता-नियमं प्रत्युद्देश्यत्वाद्विशेषणाविवचेति। तन्न। श्रुताभिघारणं प्रत्यु-पादेयत्वेन विवचितत्वे आर्थिकाधारतानियमं प्रत्यपि चयाणामेवो-द्देश्यतापत्तेः। किञ्च यदर्थो नियमाश्रयस्तदर्थो नियम इति सर्वत्र क्लृप्तेराधारतानियमोऽपि अभिघारणनियमवत्तद्द्वारा प्रयाजेष्वेवोप-युज्येत। इतरथा पशुस्वजाघनीतुषोपवापादिवाक्येष्वपि करणता-नियमस्य जाघनीप्रतिपत्त्यर्थत्वकपालसंस्कारकत्वापत्तेरेकत्वाविवचा-पत्तिः। एतेन पदद्वयेऽपि लक्षणामनङ्गीकृत्याधारतानियमोद्दे-श्यतामात्रेणैव हविःसंख्याविवचामुक्तवतो भट्टसोमेश्वरस्यापि मतं प्रत्युक्तम्।

यत्तु केचित् तृतीयाया एव द्वितीयार्थे लक्षणामङ्गीकृ-त्याभिघारणस्योभयार्थत्वं विजातीयानेकोद्देश्यकत्वाच्च न वाक्यभेद-इत्युक्तम्। तदपि न। निषादस्थपत्यधिकरणविरोधस्य तादव-स्थ्यात्। श्रुतोद्देश्यसत्त्वे लाक्षणिकत्वस्यान्याय्यत्वाच्च। न्याय्यत्वेऽपि वा श्रुतत्वीकृपोद्देश्यसंस्कारस्यैव धारणप्रयोजकत्वापत्तेश्च।

किञ्च वैजात्यं न तावन्निमित्तफलादिवत्। उभयोरपि स्फीतत्वात्संख्योद्देश्यत्वस्य समानत्वात्। अथ वैजात्याभावेऽपि साकाङ्क्षत्वादेव नानेकोद्देश्यता। तथात्वे गोदोहनादेरपि पशु-प्रणयनाद्युभयोद्देश्यतापत्तेः। अतोऽभिघारणस्य केवलहविःसंस्कारा-र्थत्वात्त्विनयनकालीनतुषोपवापपुरोडाशकपालन्यायेन शेषोत्पादना-

प्रयोजकत्वेऽपि धारणप्रयोजकत्वोपपत्तिः। अतश्च दैवे हृदया-द्यभिघारणार्थं वाजपेये प्राजापत्यवपाभिघारणार्थं धारणीय एव पात्रान्तरे प्रयाजशेषः। प्रकृतौ हि प्रयाजोत्तरं वपायागमात्रं कृत्वा कालान्तरे हृदयादियागः। वाजपेये च प्राजापत्यान् क्रतु-पशूंश्चोपक्रम्य दशप्रयाजोत्तरं पर्य्यग्निकरणान्ते कृते प्राजापत्यानां वैकल्पिको ब्रह्मसामकाले उत्कर्षः। अतश्च पर्य्यग्निकरणोत्तरभाव्यु-त्तरप्रयाजशेषेण क्रतुपशुवपाभिघारणवत्कालान्तरभाविप्राजापत्यव-पाभिघारणार्थमपि धार्य्यः शेष इति प्राप्ते।

सत्यं प्रयाजशेषाभिघारणं हविःसंस्कारार्थमेव वाक्येन विधीयते। तथापि तु प्रयाजशेषस्य प्रतिपत्त्यपेक्षत्वात् तदनुरोधेन स्विष्टकृदादेव वाक्यान्तरकल्पनयाऽभिघारणस्यैव तत्प्रतिपत्त्यर्थमङ्गीक्रियते। न च प्रयाजेषु सर्वहोमस्यैवापत्तेर्न प्रतिपत्त्यपेक्षा। आर्थिकप्रतिपत्त्यन्तर-विध्यभावेऽपि प्रयाजशेषकरणकाभिघारणविधिनैव द्वितीयतुषोप-वापवद्धारणाक्षेपापत्त्या सर्वहोमानापत्तेः।

न च स्विष्टकृदादिहांशभेदाभावादभिघारणस्य श्रौतेन हवि-रर्थत्वेनाक्षेपमात्रप्रमाणकप्रतिपत्त्यर्थत्वबाधः। श्रौतविधेर्धारणाद्या-क्षेपशक्तिकल्पनगौरवपरिहारार्थमेव फलमुखप्रतिपत्तिकल्पनानुमतेः। अतएव ज्ञानाद्याक्षेपशक्तिकल्पनागौरवपरिहारार्थमधिकारिसङ्कोच-वत् संनिहितहविःसङ्कोचोऽपि न दोषाय। अत एव यत्र न प्रतिपत्तिर्यथा द्वितीयतुषोपवापकपालादौ, तत्र न तत्कल्पना। लाघवान्तु वक्ष्यते।

न चार्थिकप्रतिपत्तिविधेरपि धारणाक्षेपशक्तिकल्पनाऽऽवश्यकत्वे

श्रौतविधेरेव तत्कल्पकत्वौचित्यमिति वाच्यम्। पूर्वाधिकरणवदेवा-नुमानिके तत्कल्पनस्यादोषत्वात्। अनुमानस्य फलमुखत्वाच्च। अतश्च प्रतिपत्तिबलेनैवाचिन्नस्य धारणस्योपजीवनादिनिगमनाविरहेण सन्निहितसर्वहविःषु अभिघारणोपपत्तावपि न कालान्तरीयहविरर्थं धारणमिति। अत एव प्राजापत्यवपानां क्रतुपशुभिः सह करणपक्षे सह पशूनालभते वपानामभिहृतत्वायेति लिङ्गं अन्यथामकालीनत्व-पक्षे.तदभावं दर्शयति। स्पष्टञ्च सव्या वा एतर्हि वपा यर्हि अनभिहृता इति रूचत्वाख्यं सव्यत्वमस्मिन्पक्षे दर्शयति। न चाभि-घारणान्तरेण रूचत्वनिवृत्तिः। तस्य तापमात्रनिवर्त्तकत्वेन रूच-तायाश्चनिवारणात् ॥४॥१॥१४॥

समानयनं॥ दर्शपूर्णमासयोः प्रयाजार्थं जुह्वां चतुर्गृहीतं विधाय, अष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तदिति वचनेन चौपभृतं विधाय पुनर्ध्रुवायां चतुर्गृहीतं विहितम्। तत्रैव चाति-हायेडो बर्हिः प्रतिसमानयते जुह्वामौपभृतमिति श्रुतम्।

तत्र किं प्रयाजाः समानयनस्य तत्संस्कृताज्यस्य प्रयोजकास्तदर्थ-श्चेदमुभयं, उत ते अप्रयोजकाः अनूयाजा एव तु तयोः प्रयो-जकास्तदर्थश्चेदमुभयमिति चिन्तायाम्।

प्रयाजानूयाजेभ्यस्तदिति द्वन्द्वान्ते श्रुतस्य बहुवचनस्य प्रत्येकं सम्बन्धादुद्देश्यगतस्याप्यप्राप्तत्वेनानुवादायोगादौपभृतस्य न्यायत एव सर्वप्रयाजार्थत्वप्रतीतेः प्रयाजार्थस्यार्द्धस्य सर्वप्रयाजादौ समानीतत्वा-द्धर्हिःप्रयाजकाल उपभृति अनूयाजार्थस्यैव सत्त्वेन तस्यैवेदं समानयनं तत्संस्कारार्थमनूयाजप्रयुक्तं न तु प्रयाजप्रयुक्तम्। अत एव जौहव-

स्याघ्यविशेषेण सर्वप्रयाजार्थत्वादौपभृतेन विकल्पः। चिरतः प्राचीनं प्रयाजान्यजतीति तु अवयुत्यानुवादमात्रमिति प्राप्ते।

कालविशिष्टसमानयनस्यानूयाजान्यसंस्कारकत्वे अदृष्टार्थत्वापत्ते-र्विशिष्टविधिगौरवात् चिरित्यस्यावयुत्यानुवादत्वापत्तेश्च प्रयाजार्थ-स्येदं समानयनम्। तच्च जुह्वा जुहोतीति वचनादर्थप्राप्तमेवेति तदनुवादेन कालमात्रमनेन विधीयते। अतश्च प्रयाजानूयाजेभ्य-इत्यत्र प्रयाजाभ्यामनुयाजेभ्य इत्यपि विग्रहे न दोषः। अत एव जौहवमपि परिशेषादाद्यप्रयाजत्रयार्थमेवेति न विकल्प-प्रसक्तोऽपि।

एवञ्चातिथ्यायामिष्टान्तत्वेनानूयाजाभावेऽपि चतुर्गृहीतान्याज्या-नीति बहुवचनं जौहवोपभृतचतुर्गृहीतयोः प्रयाजेषु समुच्चयात् ध्रौवचतुर्गृहीतमादाय सङ्गच्छते। इतरथा तयोर्विकल्पादनूयाजा-भावे ध्रौवमादाय चतुर्गृहीतद्वित्वापत्तेर्बहुवचनानुपपत्तिः। अतश्च प्रयाजद्वयं समानयनस्य तत्संस्कृताज्यस्य च प्रयोजकमिति सिद्धम्। सत्त्रादौ तु समानयनपदं तत्कालीनप्रयाजद्वयपरम्। आज्यसंस्कारस्य समानयनस्याज्यप्रयोजकत्वसिद्धान्तानुपपत्तेः॥४॥१॥१५॥

तत्र॥ एवं तावदौपभृतस्य प्रयाजार्थत्वमङ्गीकृत्य प्रयोज्यत्वं विचारितं, तदेव चाक्षिप्य समाधीयते। चतुर्जुह्वां गृह्णाति अष्टावुपभृति गृह्णाति चतुर्ध्रुवायां गृह्णातीत्यसंयुक्तोत्पन्नान्या-ज्यानि लिङ्गप्रकरणाभ्यां यावत्सर्वप्राकरणिकद्रव्यापेक्षकार्य्यार्थत्वेन विनियुज्यन्ते, तावच्चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तदष्टावुपभृति गृह्णाति अनूयाजेभ्यस्तत्सर्वस्मै वा एतद्यज्ञाय गृह्यते तत् ध्रुवाया-

माज्यमित्यादिवचनैस्तत्तत्कार्य्यार्थत्वेन विनियोगादौपभृतस्यानूयाज-मात्रार्थत्वम् । यत्तु अष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तदिति वचनम् । तत्र प्रयाजत्वानूयाजत्वरूपोद्देश्यतावच्छेदकभेदे वाक्य-भेदापत्त्याऽनूयाजानां प्रयाजोत्तरत्वानुवादमात्रमिति प्राप्ते ।

उभयतोऽप्यनुवादावश्यकत्वे समानयनादिविधिदृष्टार्थत्वाद्यनु-रोधेन शुद्धानुवादवचनस्यैवानुवादत्वम् । न च वाक्यभेदः, ग्रहैकत्वा-धिकरणव्युत्पादितकौस्तुभोक्तरीत्याऽध्वर्युयजमानौ वाचं यच्छत इति वदवाक्यभेदात् । अत औपभृतं प्रयाजानूयाजार्थमिति सिद्धम् ॥ ४॥१॥१५॥

तदष्टसंख्यं ॥ अष्टावुपभृतीत्यनेनाष्टसंख्याकं ग्रहणं विधीयते, उत चतुःसंख्याकग्रहणद्वयमिति चिन्तायाम् । श्रुतत्वादष्टसंख्यैव विवक्षिता न चतुःसंख्याद्वयं, लक्षणापत्तेः । न चानारभ्याधीतेन चतुर्गृहीतं जुहोतीत्यनेनानिर्दिष्टद्रव्यकसर्वहोमानुवादेन चतुर्गृही-तविधानात्प्रयाजादिष्वपि तत्प्राप्तेः प्रयाजानूयाजार्थचतुर्गृहीतद्वयो-द्देशेनोपभृत्पात्रमात्रस्यात्र विधिप्रतीतेरष्टपदं चतुष्कद्वयलक्षणार्थ-मिति वाच्यम् । अनारभ्यविधिना जुहोतिचोदनाविहितप्रधान-भूतहोमोद्देशेन चतुर्गृहीतविधानेऽपि प्रयाजादिषु यजतिचोदना-चोदितेषु प्रक्षेपाख्यहोमस्य तदीयद्रव्यसंस्कारकत्वेन तमुद्दिश्य चतु-र्गृहीतविधानानुपपत्तेः । अत एवोपांशुयाजादौ चतुर आज्यस्य गृह्णान आहेत्यादिविध्यन्तरादेव ध्रुवादितश्चतुर्गृहीतविधानम् ।

अस्तु वैतादृग्विषये तत्प्राप्तिस्तथापि वाचनिकेन प्राकरणिकेन वा अष्टत्वेन बाधात् तस्य प्रयाजाद्यतिरिक्तविषयत्वमेवावश्यकम् ।

न च होमाङ्गभूतचतुःसंख्यायाः प्रधानाश्रितत्वादङ्गाश्रितया ग्रहणाङ्गभूतयाष्टसंख्यया बाधासम्भवः, उभयोरपि ग्रहणाङ्गत्वात् ।

अस्तु वा चतुःसंख्याया होमाङ्गत्वं, तथापि होमस्याप्यत्राङ्गत्वादेव न तदङ्गचतुःसंख्याया बलवत्त्वम् । किञ्च होमोद्देशेन चतुर्गृहीतविधिना प्रतिव्यक्ति तद्भेदापत्तेर्यावत्प्रयाजानूयाजव्यक्तिभेदेन चतुर्गृहीतभेदात् तावच्चतुर्गृहीतोद्देशेनैकपात्रविधावष्टत्वानुवादानुपपत्तिः । न हि तवाज्यभागयोरिवावयवशो होमे किञ्चिन्नियामकमस्ति ।

अस्तु वा तत्तथापि यथैवावयवशो होमेऽपि चतुर्गृहीतस्य प्रयाजानूयाजसाधनत्वाविघातस्तथैवाष्टसंख्याकग्रहणेनानुष्ठितेऽपि तदन्तर्गतत्वेन चतुष्कद्वयस्य सत्त्वादुभयोरपि संख्ययोः साधनत्वाविघातः । किञ्चैवं तव प्रयाजद्वयानुयाजत्रये मिलित्वैकं चतुर्गृहीतमवयवशः प्राप्येतेत्यष्टत्वानुवादानुपपत्तिः । अतस्तत्तत्संख्याकग्रहणसंस्कृताज्यान्येवैतैर्वाक्यैस्तत्तत्कार्य्योद्देशेन विधीयन्ते । न चास्मन्मतेऽपि प्रतिप्रधानं भेदप्रसङ्गः । विनियोगवाक्यानुसारेण तथा प्राप्तावपि पृथगुत्पत्तिवाक्यवैयर्थ्यान्यथानुपपत्त्या तथोत्पन्नस्यैकस्यैवावयवशो विनियोगाङ्गीकारात् । अतोऽष्टत्वं विवक्षितमिति प्राप्ते ।

चतुर्गृहीतान्याज्यानि भवन्ति न ह्यत्रानूयाजान्यक्ष्यन् भवति इत्यातिथ्यायामिडान्तायां श्रुतस्य चतुर्गृहीतस्य बहुत्वे अनूयाजसामान्याभावरूपस्य हेतोरेव तात्पर्य्यग्राहकतया अष्टत्वमविवक्षितम् । अयं हि न तेन ह्यन्नं क्रियत इति वदर्थवादोऽपि तु लक्षणाद्यभावाद्धेतुविशिष्टचतुर्गृहीतबहुत्वविधिरेव चतुर्गृहीतनिवृत्तिफलकः ।

अतस्तद्बलेन व्याप्तिकल्पनायां यत्र यत्रानूयाजसामान्याभावोऽन्यत्रापि, तत्र चतुर्थचतुर्गृहीतनिवृत्तिरूपसाध्यसिद्धिः। अतश्च व्यतिरेकमुखेन चतुर्थचतुर्गृहीतमनूयाजार्थमितरच्च प्रयाजार्थमिति सिद्धं भवति। तच्चाष्टत्वस्य चतुष्कद्वयलक्षणार्थत्वे उपपद्यत इति तत्सिद्धिः। इतरथा ह्यनूयाजाभावेऽप्यष्टगृहीतस्यानिवृत्तत्वेन जौहवध्रौवरूपचतुष्कद्वयस्यैव प्राप्तेर्बहुत्वानुवादानुपपत्तिः। कथञ्चित् प्राप्तावपि वा समस्तवाक्या-नर्थक्यम्। न च वाचनिकबहुत्वे विधेरेवायमर्थवादः हेतुपरत्वे सम्भवति। स्तुतिलक्षणाभावात्। वस्तुतस्तु नाष्टपदेऽपि लक्षणा। हेतुबलेनैवार्धस्यानूयाजार्थत्वेऽर्धस्य प्रयाजार्थत्वे चावगते आतिथ्यादा-वनूयाजाभावेनैवाष्टत्वस्य बाधोपपत्तेः। अस्तु वा मा। प्रयोजनं, पूर्वपक्षे प्रयाजद्वयार्थे अर्धन्यूनसमानयनम्। अष्टगृहीतस्य समं स्यादश्रुतत्वादिति न्यायेन पञ्चस्वपि विभागात्। सिद्धान्ते त्वर्धं समानेयम्॥ ४॥१॥१६॥

इति भाट्टदीपिकायां चतुर्थस्य प्रथमः॥

स्वरुः॥ ऐन्द्रे पशौ, यूपस्य स्वरुं करोति स्वरुणा पश्वङ्मनक्तीति श्रुतम्। तत्र स्वरुशब्दवाच्यस्याप्रसिद्धत्वादाद्यवाक्येन स्वरुकर्मका* भावनैव विधीयते। तत्र च साधनीभूतद्रव्यापेक्षायां, तत्र यः प्रथमः शकलः परापतेत्तत् स्वरुरिति वचनेन शकलस्य साधनत्वावगमा-दितिकर्त्तव्यतापेक्षायां यूपपदेन तद्धर्मलक्षणया, अञ्जनप्रोक्षणादयो-विधीयन्ते। अथ वा यथैव यूपावयवकत्वं सिद्धान्ते षष्ठ्यर्थस्तथैव मन्मते यूपधर्मकत्वसम्बन्धः षष्ठ्यर्थ इति न लक्षणा। एवमुत्पन्नस्य

* इत्थमेव पाठः सर्व्वत्र। स्वरुकर्म्मिका,—इति तु भवितुं युक्तम्।

च द्वितीयवाक्येन विनियोगः। अस्तु वा द्वितीयवाक्याक्षिप्तस्वरु-कर्मकभावनानुवादेन यूपधर्ममात्रविधिरिति न विशिष्टविधिरपि।

न चैवमपि प्रकलशब्दस्य सम्बन्धिकत्वादेवोत्तरार्धादिवद्यूपीयत्वोपपत्तेरप्रयोजकत्वोपपत्तिः। स्वतन्त्रकाष्ठाप्रयोजकत्वेऽपि स्वरु-निष्ठाञ्जनप्रोक्षणादिधर्मप्रयोजकत्वोपपत्तेः। अतएव धर्मप्रयोजनकत्वेन काष्ठान्तरप्रयोजकत्वशङ्कायां तन्निवर्त्तकत्वेन, यदन्यस्य* वृक्षस्य स्वरुं कुर्यादन्येऽस्यां† लोकमभ्यारोहेयुरिति निन्दाऽपि सङ्गच्छते। धर्मप्रयोजकत्वेऽपि च यूपैकादशिन्यां यथानुपूर्व्यं स्वरुभिः पशून् समंज्येति यूपभेदेन स्वरुभेदे दर्शनं नानुपपन्नम्। न चैवमपि षष्ठ्या यूपावयवत्वसम्बन्धेनाप्युपपत्तेर्यूपधर्मकत्वयूपसम्बन्धपरत्व एव नियामकाभावः। प्रकलकरणकत्वादेव यूपीयत्वसिद्धेराद्यवाक्यवैयर्थ्यापत्तेरेव नियामकत्वादिति प्राप्ते।

न यूपधर्मकत्वसम्बन्धः षष्ठ्यर्थः। आनुशासनिकयूपावयवकत्व-सम्बन्धस्यैव तदर्थत्वोपपत्तेः। अतएव यथाशक्ति प्रयोगादौ यूपाभावेऽपि स्वर्वर्थमेव वनगमनादिसिद्धिः पश्वारनिलसिद्ध्यर्थम्। न च प्रकलश्रुत्यैव प्राप्तत्वात्तद्विधिवैयर्थ्यम्। एतद्विध्यभावे यूपपदरहितानां परस्वादान-वनगमन-वृक्षच्छेदन-शाखाक्रत्यादीनां यूपार्थत्ववत् स्वर्वर्थत्वस्यापि सम्भवेन प्रकलश्रुतेर्वृक्षप्रतियोगितयैवोपपत्तेः। द्वितीय-यूपच्छेदनादि, यूपच्छिनत्तीत्यादिवाक्येन विहितं यूपाभावे परं निवर्त्तताम्। न तु वनगमनाद्यपि। अतस्तन्निवृत्तिफलकयूपानु-

---

* यद्यन्यस्य,—इति भाष्यधृतः पाठः।

† अन्यस्य, इत्यादर्शपुस्तके पाठः।

निष्पन्नत्वसिद्ध्यर्थं यूपावयवकत्वविधिरर्थवानेव। अतएव यूपानु-निष्पन्नप्रथमशकलमाश्रे येन केनचित्काष्ठेनाञ्जनं पशोः। तेन प्रोक्षणादेः स्वर्वर्थत्वे प्रमाणाभावाच्च स्वरुस्तेषां प्रयोजकः। सूत्राणि च सुधीभिरस्मिन्नेवार्थे व्याख्येयानि न तु भाष्यकारोक्ते ॥ ४॥२॥१॥

शाखायां॥ दर्शपूर्णमासयोः शाखामधिकृत्य, प्राचीमाहरतीति श्रुतम्। तत्र प्राचीशब्दस्तावद्दिग्विशेषवाची। प्राचीमुदेति सवितेति प्रयोगात्। देशवाची वा, न तु तद्देशस्थशाखावाची। अतश्चोप-क्रमस्थप्रातिपदिके लक्षणाऽपेक्षया वरं द्वितीयैव सप्तम्यर्थे व्याख्यातुं युक्ता। प्रतिशब्दाध्याहारो वा। [१]कर्माकाङ्क्षायां च प्रकृतत्वादेव शाखा तत्त्वेन सम्बध्यते। प्राग्देशस्य च पूर्वोत्तरावध्यपेक्षायां प्रत्यक्षो-पस्थितत्वात्सामर्थ्याच्च वन-विहारदेशौ तत्त्वेन सम्बध्येते। तेन वना-द्विहारोपलक्षितप्राचीं प्रति शाखामाहरतीति वाक्यार्थो न तु वृक्षस्य प्राचीं शाखामिति। तथात्वे छिनत्तीति स्याच्च त्वाहरतीति प्राप्ते।

प्रधानभूतविभक्तौ लक्षणायाः प्रतिशब्दाध्याहारस्य वा कर्माध्या-हारस्य पूर्वोत्तरावध्यध्याहारस्य तस्यापेक्षया एकस्मिन् प्रातिप-दिकएव प्रकृतशाखालक्षणया वाक्यार्थोपपत्तेः, प्राक्त्वस्य वृक्षावयव-विशेषत्वरूपशाखात्वेनैवोपस्थितवृक्षावधिकतयाऽप्युपपत्तेः शाखावाद-एवायम्। तेन वृक्षस्य प्राग्देशभवां प्राचीं शाखां छित्त्वा आहर-तीत्यर्थः। प्रयोजनानुरोधात्तु विहारदेशं प्रतीति लभ्यते। शाखायां

(१) प्रतिशब्दाध्याहारे प्राचीं प्रति आहरतीति लभ्यते। तत्र च किमाहरतीत्यस्याहरणस्य कर्म्माकाङ्क्षा। तत्र प्रकृता शाखैव कर्म्मत्वेन संबध्यते इति भावः।

प्राग्देशभवत्वमात्रविधानफलकत्वाच्च लाघवम्। तव तु शाखाहरणो-द्देशेन प्राग्देशभव-विहारावधिकत्वविधाने गौरवम्। याज्ञिकास्तु दिग्वादमेव वदन्ति॥ ४॥२॥१॥

शाखायां॥ तत्रैव, शाखामाच्छिनत्ति, शाखामाहरति, मूलतः शाखां परिवास्योपवेशं* करोतीति श्रुतम्। तत्र शाखाशब्दस्ता-वदाद्यवाक्ययोः समूलस्यैव वाचको न लग्रमात्रस्य। अतस्तृतीयवाक्ये-ऽपि तत्पर एव। तदर्थं च परिवासनं अग्रमूलविभागार्थम्। अत-स्तृतीयवाक्ये मूलत इति पदं द्वितीयार्थे तृतीयार्थे वा तसिं व्याख्यायोपवेशं करोति इत्यत्रान्वेति। न त्वपादानार्थकं सत्परि-वासने। तथात्वे अग्रस्याप्युपवेशत्वप्रसङ्गेन मूलत इत्यस्योत्तरत्रान्वया-वश्यकत्वात्। अतः परिवासनेनाग्रं मूलं च शाखापदाभिधेयं विभज्य मूलमुपवेशसंज्ञमुपादत्त इति तृतीयवाक्यार्थः। तस्य च विनियोगापेक्षायामग्रस्य वत्सापाकरणादौ मूलस्य कपालोपधानादौ वचनाद्विनियोगः। अत उभयमपि छेदनाहरणपरिवासनादीनां प्रयोजकम्।

अस्तु वा शाखाशब्दोऽग्रमात्रवाची। तथापि मूलत इति द्वितीयार्थे परिवासनस्य कर्मेति परिवासनमुभयप्रयुक्तम्। स्यपा वा मूलापादानकपरिवासनमुपवेशकरणार्थं विधीयत इति सोऽपि प्रयो-जक इति प्राप्ते।

मूलत इति तसिः पञ्चम्यर्थक एव। सार्वविभक्त्यर्थकत्वानुशासनं तु लाक्षणिकम्। अन्यथा विशिष्य पञ्चम्यर्थकत्वानुशासनवैयर्थ्य-

* उपवेषशब्दो मूर्द्धन्यषकारयुक्तो भाष्ये सर्व्वत्र।

प्रसङ्गात्। अतो मूलापादानकं परिवासनं द्वितीयाश्रुत्या शाखा-संस्कारकमेव। न तु वाक्यादुपवेशकरणाङ्गम्। न चोभयसंस्कारकम्। द्वितीयाश्रुतेर्बलीयस्त्वात्। उद्देश्यानेकत्वप्रसङ्गाच्च। अतः शाखा-शब्दोऽपि मूलापादानकपरिवासनसिद्ध्यर्थं न विरुध्यते। अतएव वत्सापाकरणादौ शाखापदेनैवाग्रविनियोगः। अतो मूलं परिवास-नाङ्गमेव। एवं च व्यवहितकल्पनाऽपि न प्रसज्यते। अतएव परिवास-नानुनिष्पन्नमूलस्यैवोपवेशरूपं संज्ञान्तरकरणम्[१]। अग्रस्य शाखा-पदेनैव सर्वत्र विनियोगेन संज्ञान्तरवैयर्थ्यापत्तेः। अतो न व्यवहित-कल्पनाया आवश्यकत्वम्। अतः संज्ञाकरणमात्रफलक उपवेशं करोतीत्ययमनुवादो ल्यबन्तापेक्षितक्रियान्तरप्रदर्शनार्थः। अतो न मूलं छेदनादीनां प्रयोजकम्। प्रयोजनं, पौर्णमास्यां शाखाऽभावेन येन केनचित्काष्ठेन कपालोपधानं न तूपवेशकरणम्॥ ४॥२॥३॥

हरणे॥ तत्रैव, सूक्तवाकेन प्रस्तरं प्रहरतीति सह शाखया प्रस्तरं प्रहरतीति च श्रुतम्। तत्राद्यवाक्ये तावन्मान्त्रवर्णिकदेवतासम्बन्धा-द्धोमविधिरित्युक्तम्[२]। न तु द्वितीयवाक्यविहितप्रहरणानुवादेन प्रस्तरमुद्दिश्य सूक्तवाकविधिरिति तन्त्रसारोक्तम्। यागस्यापि विधौ वाक्यभेदापत्तेः। यागविधायकवाक्यान्तरककल्पने गौरवाच्च। अतश्च द्वितीयवाक्ये प्रहरतिना होममनूद्य शाखासाहित्यमात्रविधिः। सहशब्दस्य निपातत्वेन परस्परान्वयव्युत्पत्तेश्च, न शाखा साहित्यं

---

(१) योऽयं समाहृतायाः पलाशशाखायाः परिवासनानुनिष्पन्नो मूल-भागः प्रादेशमितः, तस्यैवोपवेशसंज्ञेत्यर्थः।

(२) तृतीयाध्यायस्य द्वितीयपादे सूक्तवाके चेति पञ्चमाधिकरणे।

चेति विधेयानेकता। अतस्य यथैव होमे प्रस्तरोगुणभूत एवं शाखाऽपि। तत्र लेतावान्विशेषः। प्रस्तरस्य द्वितीयया प्रक्षेपांशं प्रति प्रतिपाद्यत्वावगमात्त्यागांशस्तस्याक्षेपक इत्युक्तम्। शाखायास्तु वत्सापाकरणादाविव गुणत्वस्यैवावगतेः प्रस्तरहोमः प्रयोजक एवेति पौर्णमास्यामपि तदर्थं शाखोत्पादनीयेति प्राप्ते।

आद्यवाक्ये सूक्तवाकान्वयानुरोधेन प्रहरतिना होमलक्षणायामपि द्वितीयवाक्ये प्रहरतिना होमलक्षणायां प्रमाणाभावात् प्रहरणस्यैव शाखासाहित्यसम्बन्धमात्रं क्रियते। अतस्य यथैव प्रहरणं प्रति प्रस्तरस्य कृतार्थस्य संस्कार्यत्वं, तथा शाखायाः। कृतार्थत्वाविशेषात्। न च तृतीयया तस्याः करणत्वावगतिः। सह-शब्दयोगेन तस्याः करणत्वानभिधायकत्वात्। न चैवं शाखां प्रहरतीत्येवमेव वक्तव्यत्वावगतेः प्रस्तरादिपदवैयर्थ्यम्। प्रस्तरप्रहरणकालीनैतत्प्रहरणविध्यर्थत्वात्। अतएव प्रस्तरप्रहरणकालविशिष्टप्रहरणस्यैव शाखोद्देशेनाच विवक्षितत्वया विधानम्। न तु प्रस्तरप्रहरणव्यक्तेरेव शाखोद्देशेन विनियोगः। तथात्वे यथाशक्ति प्रयोगादौ प्रस्तराभावेऽपि शाखाप्रहरणानापत्तेः। अतस्य प्रतिपत्तित्वात् प्रहरणमपि न शाखायाः प्रयोजकम्। तेन पौर्णमास्यां न शाखोत्पादनम्। यथा तु प्रस्तरप्रहरणव्यक्तावेव शाखाया न गुणत्वम्, तथा षष्ठे वक्ष्यते॥ ४॥२॥४॥

उत्पत्त्यसंयोगात्॥ तत्रैवापः प्रणयतीत्यनेन विहितप्रणयनसंस्कृतानामपां, प्रणीताभिर्हवींषि संयौतीति वचनेन संयवनार्थत्वेन विनियोगवत्त्वे, अन्तर्वेदि प्रणीतानिनयनार्थत्वेनापि विनियोगादुभयप्रयुक्तत्वम्। न च निनयनवाक्ये द्वितीयानिर्देशात् प्रतिपत्तित्व-

ग्रहणा। कुम्भलेनाध्वर्युणा यावत्संयवनोपयोगिनीनामेवापां प्रणयनेन ग्रेषाभावात् प्रतिपत्तित्वानुपपत्तेः। अतः सक्तुन्यायेन निनयनस्यार्थ-कर्मत्वात् प्रयोजकत्वमिति प्राप्ते।

द्वितीयासंयोगादाकीर्णकराणां प्रतिपत्तिरेवेयम्। न च ग्रेषा-भावः, तस्यावर्जनीयत्वात्। अनन्यथासिद्धप्रतिपत्तेर्धारणप्रयोजकत्वाच्च। अतः संयवनमेव प्रयोजकम्। अत्र चाग्नेयादिहविःपाकत्वेनैव संयवनस्य उद्देश्यता। तेन चर्वादावपि प्रणीताः भवन्त्येव। अत एवाभ्युदितेऽष्टौ दधिपयसोरपि प्रणीताधर्मावच्यन्ते। वस्तुतस्तु कपालं प्रति स्रोत-जन्यपाकत्वेनैव पिण्डसंयवनत्वेनैवोद्देश्यता। अतिप्रसक्तधर्मेण तदङ्गी-कारे प्रमाणाभावात्। दधिपयसोः प्रणीताधर्मास्तु क्त्वाचिन्तया। याज्ञिकास्तु चर्वादावपि प्रणीताः कुर्वन्ति। प्रयोजनं, संयवनोत्तरं प्रणीतानामग्नौ निनयनार्थं तदनुत्पत्तिः॥ ४॥२॥५॥

प्रासनवत्॥ सोमे, दण्डेन दीक्षयतीत्यनेन दण्डस्य दीक्षाभि-व्यञ्जकत्वं विधाय, क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति श्रुतम्। तत्र पूर्ववदेव द्वितीयासंयोगात् मैत्रावरुणसम्बन्धि दानं दण्डप्रतिपत्तिः चतुर्थी षष्ठ्यर्थलक्षका*। वेदविदे गान्ददातीति वद्वा प्राधान्याभावेऽपि सम्प्रदानार्थिकैव। अतश्च दीक्षितदण्डस्य दानमात्रेण प्रतिपत्तिसिद्धेर्नावश्यं स एव दण्डो दण्डी प्रैषानन्वाहे-त्यनेन प्रैषानुवचने विनियुज्यते। तेन न प्रैषानुवचनं दण्डदानस्य प्रयोजकमिति निरूढपश्वादावपि न तदनुष्ठेयमिति प्राप्ते।

---

* इत्थमेव पाठः सर्व्वत्र। लक्षिका,—इति तु भवितुमुचितम्।

कर्मणा यमभिप्रैति स सम्प्रदानमिति स्मृत्या क्रियां प्रति व्याप्यमानं कर्मकारकं प्रत्यपि सम्प्रदानस्य व्याप्यमानत्वावगतेर्विधिवत्वेन कस्य चिद्व्याप्यमानस्येप्सितत्वे कल्प्यमाने व्याप्यव्याप्यस्य सुतरां व्याप्यत्वमिति न्यायेन मैत्रावरुण एव तदवगतेस्तस्यैवोद्देश्यत्वम्। सम्भवति च मैत्रावरुणस्योपयोगादुद्देश्यत्वम्। वेदविदादौ तु बाधात् स्वर्गादेरेवोद्देश्यता। दृष्टश्चावलंबनं दण्डस्य प्रयोजनमिति नादृष्टार्थत्वमपि। न चैवं दण्डमिति द्वितीयाऽनुपपत्तिः, सक्तुवत्करणत्वलक्षणार्थत्वात्।

यत्तु मूलेऽनीप्सितकर्मत्वेन तदुपपत्तिरित्युक्तम्। तज्जुहोतेरपि, तृतीया च होश्छन्दसीत्यादिश्रुत्या* सकर्मकत्वावगतेः सक्तुष्वपि तदापत्तेरनीप्सितकर्मत्वेऽपि चोद्देश्यानेकत्वनिमित्तकवाक्यभेदापरिहार्यत्वस्य कौस्तुभ एवोक्तत्वादुपेक्षितम्।

अस्तु वा दण्डस्यानीप्सितकर्मत्वेनैवान्वयः। सम्प्रदानस्य च सत्यपि प्राधान्ये सम्प्रदानत्वेनैवान्वयात् न द्विकर्मकत्वापत्तिरित्यपि बोध्यम्। अतश्च दण्डविशिष्टदानस्योपयोगापेक्षायां दण्डी प्रैषानन्वाहेत्यादिना प्रैषानुवचनार्थत्वेन विनियुज्यते। अतो निरूढपश्वादौ दीक्षासोमक्रयाभावेऽपि दण्डदानानुष्ठानं तस्य प्रैषानुवचनप्रयुक्तत्वान्नानुपपन्नम्।

इदन्त्विह वक्तव्यम्। प्रदानस्य दण्डं प्रत्यर्थकर्मत्वे दीक्षादण्डस्य कथं दानाङ्गत्वम्। न हि स्वत्वत्यागे कृते यजमानेन पुनः स्वयं

---

* इत्यमेव पाठः सर्व्वत्र। स्मृत्या इति तु भवितुमुचितम्। तृतीया च होश्छन्दसि इति हि पाणिनिसूत्रम्। न त्वियं श्रुतिः।

व्यवहर्त्तुं शक्यम् । न चैतावतैव दण्डकार्यदीक्षाभिव्यञ्जकालंबन-समाप्तिः, येनोपादानलाघवानुरोधेन प्रकृत एव गृह्येत । न च दानविध्यनुरोधेन कार्यसङ्कोचः, तस्य लौकिकदण्डेनाप्युपपत्तेः । प्रतिपत्तित्वे तु कृष्णविषाणावदेव युक्तस्तत्सङ्कोच इति ।

अत्र ब्रूमः । श्रौतविधेरर्थकर्मपरत्वेऽप्यस्मदुक्तप्रयाजशेषाभिधारण-न्यायेनार्थिकदानप्रतिपत्तिविध्यन्तरकल्पनया प्रकृतेऽपि कार्यसङ्को-चोपपत्तिः । न चात्र मध्ये प्रतिपत्त्यपेक्षाऽभावात्कल्पकाभावेन तन्न्यायवैलक्षण्यम् । दानविधेर्दण्डान्तरप्रयोजकत्वशक्तिकल्पनाभिया कार्यसङ्कोचमङ्गीकृत्यापि मध्ये तदपेक्षोपपत्तेः । दृष्टश्च लोकेऽन्यानु-रोधेनाप्यवस्थापेक्षविषये स्वकार्यसङ्कोचेनाकाल एव तदाकर्षः । शक्यते चात्र त्यागांशस्य मैत्रावरुणोपकारकत्वाभावात्तदंशे दण्ड-प्रतिपत्त्यर्थत्वं वक्तुम् । स्वत्वत्यागाभावेऽपि समर्पणमात्रेणापि प्रैषानु-वचनोपपत्तेः । अतश्च प्रतिपत्त्यनुरोधेन दीक्षितदण्डविषयत्वसिद्धिः । अत एव सत्रे सर्वेषां दण्डानां दानम् । एवं च परप्रयुक्तदण्डोप-जीवित्वाच्च श्रौतदानविधिः, प्रैषानुवचनादेर्वा दीक्षितदण्डसत्त्वे दण्डान्तराक्षेपकत्वम् । तदभावे तु दण्डान्तराक्षेपकत्वम् अक्षा-भ्यञ्जनन्यायेनेष्टमेव । श्रौतदानविधावेकत्वश्रवणादेकदण्डदानमेव मैत्रावरुणोपकारकमिति सत्रे प्रैषानुवचन एक एव दण्ड इत्यपि बोध्यम् ।

इदं च दीक्षितदण्डप्रापकवचनस्य पार्थसारथ्यादिमीमांसकैर-लिखनात्तदभावमभिप्रेत्योक्तम् । वस्तुतस्तु तैत्तिरीयशाखायां, यद्दी-क्षितदण्डं प्रयच्छतीति सार्थवादकवाक्यान्तरश्रवणात् क्रीत इति

दीक्षितपदरहितवाक्ये प्रतिपत्तिविध्यन्तराकल्पनेऽपि न क्षतिः। तैत्तिरीयवाक्येनैव मैत्रावरुणपदाश्रवणेन दानस्य प्रतिपत्तित्वसिद्धेः। क्रीतवाक्ये तु मैत्रावरुणपदश्रवणेन तत्प्राधान्यावगतेः तदुपकारार्थत्वमेव। अतश्च तैत्तिरीयवाक्ये श्रुतसम्प्रदानापेक्षया क्रीतवाक्ये स्वतन्त्रदण्डाक्षेपशक्तिकल्पनागौरवपरिहारार्थं च परस्परापेक्षिततया दीक्षितदण्डस्यैव मैत्रावरुणोपकारार्थत्वसिद्धिः।

न च क्रीतवाक्यविहितदण्ड एव तैत्तिरीयवाक्येन दीक्षासम्बन्धविधानोपपत्तेः न प्रतिपत्तिविधायकत्वमिति वाच्यम्। तथात्वे दण्डोद्देशेन दीक्षितत्वविधावेकप्रसरताभङ्गापत्तेः। न चैवमप्येतद्वाक्यविहितप्रतिपत्त्यनुवादेन क्रीतवाक्ये 'राजक्रयोत्तरकालत्वस्यैव विधानोपपत्तेनार्थकर्मत्वम्। मैत्रावरुणसम्प्रदानस्यापि विधौ वाक्यभेदापत्तेः। अत उभयत्रापि दानविधिः। तत्र च दीक्षितवाक्ये प्रतिपत्तिविधिः। सम्प्रदानाश्रवणात्। दीक्षितपदश्रवणाच्च। क्रीतवाक्ये उक्तयुक्त्याऽर्थकर्मत्वमेव। उभयप्रयोजनं पूर्ववत्।

वस्तुतस्तु क्रीतवाक्येऽपि प्रैषानुवचनोपयोगिदण्डसंस्कारकत्वमेव दानस्येति दण्डस्यापीप्सितकर्मत्वमेव। न त्वेतावता दण्डप्रतिपत्तित्वं, उपयोक्ष्यमाणसंस्कारस्य न्याय्यत्वात्। मैत्रावरुणस्य तु सम्प्रदानत्वेनैवान्वय इति न कश्चिद्दोषः। यद्वा मैत्रावरुणोद्देशेनैव दण्डदानं मैत्रावरुणसंस्कारकम्। कल्पितेन विधिना उपयोक्ष्यमाणदण्डसंस्कारकमपि। अपेक्षावशात्। सर्वे प्रैषादौ दण्डैकत्वं तु दण्डी प्रैषानन्वाहेति दण्डिपदे प्रथमातिक्रमे कारणाभावादेकवचनान्तेन व्युत्पत्तिमङ्गीकृत्य समर्थनीयमिति दिक्॥४॥२॥६॥

उत्पत्तौ॥ सोमे, कृष्णविषाणया कण्डूयते इति कण्डूयनाङ्गत्वेन कृष्णविषाणां विधाय पुनराम्नातम्। नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यतीति। तत्र निनयनवत्प्रासनं प्रतिपत्तिरेव, द्वितीयासंयोगात्। न च दक्षिणादानोत्तरकालमपि दीक्षितस्य कण्डूयनसम्भवात् कृतकरत्वाभावेन न प्रतिपत्त्यर्हता। अनन्यथासिद्धप्रतिपत्तिविधिबलादेव दक्षिणादानप्राक्कालीनकण्डूयनस्यैव कार्यत्वावधारणात्।

न च प्रतिपत्तिमात्रे कार्यस्य जातत्वेन संस्कारवैयर्थ्यापत्तेर्विनियोगभङ्गेन सक्तुवदर्थकर्मत्वमेव स्यादिति वाच्यम्। जातेऽपि कार्ये उपयुक्तादि क्व निक्षेप्तव्यमिति अपेक्षाऽस्त्येवेति प्रतिपत्तिनियमविधेरुपयोगोपपत्तेः। तज्जन्यनियमादृष्टस्य चोत्पत्त्यपूर्वं जातेऽपि तद्व्यवहितकार्योत्पत्त्युपयोगियागापूर्वनिष्ठयोग्यताजनन एवोपयोगः। न तु एतदकरणस्य तत्कार्यनाशकत्वकल्पनम्। प्रयाजादावप्यकरणस्याग्नेयादिकार्यानुत्पादकत्वकल्पनापत्तेः। अकरणत्वादेः कारणतावच्छेदकत्वादिकल्पने गौरवाच्चेत्यादि कौस्तुभे अपूर्वाधिकरणे स्फुटम्। अत एवाहिताग्नेः परिभ्रानीये कर्मणि पात्रासादनादिरूपप्रतिपत्तेरपि ऐहिककर्मातिरिक्तकर्माङ्गत्वस्यैव फलबलेन कल्पनादैहिकफलोत्पत्तावपि न क्षतिरित्यपि तत्रैव स्फुटम्॥४॥२॥७॥

सौमिके च॥ सोमे, एव वारुणेनैककपालेनावभृथं यन्ति इत्यनेनावभृथसंज्ञकं कर्म विधाय, यत्किञ्चित्सोमलिप्तं तेनावभृथं यन्तीति श्रुतम्। तत्र तृतीयया सोमलिप्तस्य करणत्वावगमात्तस्य च पानेऽसम्भवेऽप्यवभृथं प्रत्युपपत्तेः न द्वितीयार्थलक्षणया प्रतिपत्ति-

कर्मत्वम्। न च प्रतिपत्त्यपेक्षत्वाद्दृष्टार्थत्वलाभाय तल्लक्षणायामपि न दोषः। निषादस्थपत्यधिकरणन्यायेन लक्षणानुपपत्तेः। यत्तु कैश्चिद्भावनाभेदमात्राङ्गीकारेण तस्मिन्नेवावभृथे समुच्चयेन निवेशः पूर्वपक्षितः, तद्वाजिनेऽपि तथापत्तेरुपेक्षितम्। अतोऽवभृथस्यापि दीक्षोन्मोचनरूपैककार्यत्वेनं विकल्पापत्तेः द्रव्याणामपि विकल्पः। अदृष्टार्थत्वे तु तन्त्रेणानुष्ठानात्समुच्चय इति प्राप्ते।

कर्मान्तरत्वेऽवभृथशब्दस्य नामातिदेशकत्वे गौणत्वापत्तेः वाचकत्वेऽनेकशक्तिकल्पनाप्रसङ्गाद्देवताऽभावेन यागरूपत्वापत्तेः[1] वारुणेनेत्यनुषङ्गस्य देशलक्षणयाऽप्युपपत्तावन्याय्यत्वाद्यानरूपधात्वर्थ एव सोमलिप्तप्रतिपत्तित्वेन विधीयते। एवं च धात्वर्थाविवक्षा परपदार्थसम्बन्धविधानं कर्मान्तरत्वादिकल्पना च नाश्रिता भवति। न च तेनेत्यनेन करणत्वत्यागेन कर्मत्वलक्षणा। आनुशासनिकसहयोगतृतीयाऽङ्गीकारेण साहित्यमात्रोक्तौ कर्मत्वेनैव तदाश्रयणाल्लक्षणायाअप्रसक्तेः। अवभृथपदं परं देशलक्षणार्थमिति न कश्चिद्दोषः॥४॥२॥८॥

कर्तृ॥ तत्र तत्र कर्त्तारोऽध्वर्य्वादयः, कालाः पौर्णमास्यादयो, देशाः समादयो, द्रव्याणि व्रीह्यादीनि, गुणाः शुक्लादयः, संस्कारा अवघातादयस्तत्तद्वाक्ये श्रुताः कर्मचोदनयैवाक्षेपेण प्राप्तत्वान्न विधीयन्ते। अतो न कर्मविधिभिर्नियमेन प्रयुज्यन्त इत्याशङ्काऽऽभासे प्राप्ते।

---

(१) द्रव्यदेवते हि यागस्य रूपमित्यनुपदं वक्ष्यते।

यावदाक्षेपेणानियताः प्राप्यन्ते, तावदृचनेन नियमफलकविधिकरणान्नियमेनैव प्रयोजकत्वम्। नियमविधिप्रकारस्तु सर्वोऽप्यनागतावेक्षणन्यायेनात्र कौस्तुभे च मन्त्राधिकरण एव दर्शितः ॥४॥२॥९॥१०॥११[१] ॥

यजतिचोदना ॥ प्रसङ्गाद्यागादिपदार्थाविध्यनुष्ठाप्याः के इति विचार्यन्ते। यत्र प्रक्षेपाङ्गको देवतोद्देशपूर्वको द्रव्यत्यागोऽनुष्ठीयते, स यागपदार्थः। प्रयाजादिषु प्रक्षेपसिद्ध्यर्थमाद्यं विशेषणम्। तत्र यागाक्षेपेणैव प्रक्षेपसिद्धिः। शक्यतावच्छेदकं चोक्तविधत्यागत्वसमव्यापकं जातिरूपमखण्डोपाधिरूपं वा सामान्यमित्युक्तमेव। प्रक्षेपप्रधानक उक्तविधस्त्यागो होमपदार्थः। सम्प्रदानस्वत्वापादनपूर्वको द्रव्यत्यागो दानपदार्थः। उभयत्रापि शक्यतावच्छेदकं तत्तद्धर्मसमव्यापकं पूर्ववदेव सामान्यम्। एतत्सूत्रव्याख्यानान्तराणि तु गतार्थत्वान्न लिखितानि ॥४॥२॥१२॥१३॥

विधेः ॥ सोमे, यदातिथ्यायां बर्हिस्तदुपसदान्तदग्नीषोमीयस्येति श्रुतम्। तत्र देवदत्तस्य गौर्यज्ञदत्ताय दीयतामिति वद्यदातिथ्यायां बर्हिस्तत्तत आच्छिद्य उपसदाद्यर्थे विधीयते। तेनातिथ्यायां बर्हिष उपादानमात्रं प्रयुज्यते। अन्ये धर्मा आस्तरणादिकार्यस्तेतराभ्यामिति प्रथमः पक्षः।

उपादानमात्रस्यातिथ्याप्रयुक्तत्वे अप्राकृतकार्यकारित्वापत्तेरति-

---

(१) अत्र भाष्यकारेण त्रीण्यधिकरणानि कल्पितानि। प्रथमं कर्तृदेशकालानां नियमार्थम्, द्वितीयं द्रव्यगुणयोः, तृतीयं संस्कारविधानस्य। ग्रन्थकृता तु त्रयमेकत्र संगृहीतम्। एवमुत्तरापि संग्रहो द्रष्टव्यः।

प्रधानसन्निहितेष्वपि प्रवृत्त्यैव क्रमसिद्धेर्न स्थानोदाहरणता। प्रधाने स्थानाभावाच्च नोपाकरणे मुख्यक्रमाशङ्का। अतः स्थानादेव सवनीयस्य प्रथममुपाकरणं, तदुत्तरं दैवस्य, तदुत्तरमानुबन्ध्यस्य। प्रकृतिदृष्टपूर्वापर्यस्यैव* नियामकान्तराभावे नियामकत्वाङ्गीकारात्। अत्रापि स्थानावगतस्य क्रमस्य कल्पितवाक्येन विनियोगेऽवगते प्रयोगविधिना प्रयोगविधानम् ॥५॥१॥६॥

मुख्यक्रमेण ॥ मुख्यक्रमोऽप्यङ्गक्रमनियमे प्रमाणम्। मुख्यत्वञ्च प्रधानत्वम्। यत्र ह्यनेकेषां साङ्गानां प्रधानानां सहकर्त्तव्यता, तत्र प्रयोगविधिनाऽङ्गप्रधानयोः साहित्यावगतावपि प्रधानान्तरसाहित्यानुरोधेन यावदनुज्ञातव्यवधानस्वीकारेऽपि तदधिकव्यवधाने प्रमाणाभावात् प्रधानप्रत्यासत्त्यनुग्रहाय मुख्यक्रमेणैवाङ्गे क्रमनियमः। अत एव प्रवृत्तावङ्गनिरूपितप्रत्यासत्त्यनुग्रहो बीजम्, मुख्यक्रमे तु प्रधाननिरूपितप्रत्यासत्त्यनुग्रह इति तयोर्भेदो वैपरीत्येन बलाबलञ्चेति वक्ष्यते।

मुख्यक्रमोदाहरणञ्च सारस्वतौ भवत एतद्वै दैव्यं मिथुनं यत्सरस्वती सरस्वांश्चेति वाक्यविहितप्रधानद्वयक्रमात् तन्निर्वापक्रमः। अत्र हि द्रव्यसामान्याधिकरण्याभावेऽपि सम्बन्धसामान्यवाचिनस्तद्धितस्य दैव्यमिति वाक्यशेषाद्देवतापरत्वोपपत्तेर्द्विवचनेन देवताकल्पितयागद्वयं विधीयते। अत एव न यागद्वयेऽपि सरस्वानेव देवता। अर्थवादस्य 'विरूपैकशेषतात्पर्यग्राहकत्वेन सरस्वतीसरस्वद्देवत्यत्वावगमात्।

---

* इत्यमेव सर्व्वत्र पाठः। पौर्व्वापर्य्यस्यैव,—इति तु भवितुमुचितम्।

न चैवमपि सरस्वती सरस्वांश्च सरस्वन्तौ, सरस्वन्तौ देवते ययोस्तौ इति व्युत्पत्त्या एकैकस्य द्विदेवत्यत्वं किं न स्यादिति वाच्यम्। एकैकदेवत्ययाज्यानुवाक्यापाठेनैकैकदेवत्यत्वावगतेः। अत एव प्राजापत्यवत्संप्रतिपन्नदेवताकत्वाभावेन मन्त्रपाठक्रमात्प्रधानक्रमे सति मुख्यक्रमेणैव तन्निर्वापयोः क्रमः।

वस्तुतस्तु तुल्यन्यायतया पूर्वपदार्थप्रवृत्तेरिवोत्तरपदार्थप्रवृत्तेरपि पूर्वपदार्थक्रमनियामकत्वस्योक्तत्वात् प्रकृते च याज्यानुवाक्यादिरूपोत्तरपदार्थप्रवृत्त्यैव निर्वापक्रमोपपत्तेर्यद्यपि नेदं मुख्यक्रमस्यासंकीर्णमुदाहरणम्। तथापि दध्नः पूर्वं ग्राह्याहरणादयो धर्माः पठिताः पश्चादाग्नेयस्य निर्वापादयः, याज्यानुवाक्ययोस्तु विपरीतः पाठः, ततश्च पूर्वोत्तरभाविप्रवृत्तिद्वयवशात् प्रयाजशेषाभिघारणेऽनियमप्रसक्तौ मुख्यक्रमेणाग्नेयस्य प्रथममभिघारणं पश्चाद्दध्न इत्युदाहरणं वक्ष्यमाणं द्रष्टव्यम् ॥५॥१॥७॥

प्रवृत्तौ॥ तदेवं षट् प्रमाणानि निरूपितानि। तेषाञ्चाद्याधिकरणोक्तक्रमेण पारदौर्बल्यं द्रष्टव्यम्। न तु सूत्रक्रमेण। तत्र श्रुतिविरोधेऽर्थस्यैवान्यथाकल्पनाद्दौर्बल्यम्। अर्थविरोधे पाठस्य वक्ष्यते। एवं वैकृतपाठविरोधे प्राकृतस्थानबाधोऽपि। प्राकृतक्लृप्तस्थानविरोधे प्रधानप्रयोगविध्याश्रितमुख्यक्रमस्य दौर्बल्यं वक्ष्यत एव। मुख्यक्रमविरोधे प्रवृत्तिक्रमस्यापि दौर्बल्यं तथैव।

तदिह पाठक्रममुख्यक्रमयोर्बलाबलं चिन्त्यते। दर्शपूर्णमासयोराग्नेयोपांशुयाजाग्नीषोमीयरूपमुख्यक्रमादाज्यस्योपांशुयाजीयस्य प्रथमं निर्वापः पश्चादग्नीषोमीयद्रव्यस्य। पाठक्रमात्तु विपरीतः

क्रमः। तत्र पाठस्य स्मारकवाक्यद्वारित्वेन प्रत्यक्षत्वाच्छीघ्रोपस्थितेश्च बलवत्त्वम्। मुख्यक्रमस्तु मुख्ययोरेव प्रथमं केनापि प्रमाणेनावगम्य तदपेक्षया तत्साहित्यसम्पत्तये कल्प्यमानो विलम्बित इति दुर्बलः॥ ५॥१॥८॥

मन्त्रतस्तु॥ पाठयोस्तु मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान् तु ब्राह्मणपाठः। तस्योत्पत्तिविनियोगविधिगतत्वेन प्रथमोपस्थितत्वेऽपि पाठस्य स्मारकक्रमविषयत्वेव क्रमनियामकत्वोक्तेः मन्त्रसत्त्वे च तस्यैव स्मारकतया विधानोपयुक्तस्यावसर्थस्य च विधेः स्मारकत्वाभावान्मन्त्रपाठक्रम एव बलीयान्। तेन याज्यानुवाक्यादिमन्त्रपाठक्रमादाग्नेयस्य प्रथमानुष्ठानं पश्चाच्चोपांशुयाजोत्तरमग्नीषोमीयस्य। न तु ब्राह्मणपाठक्रमादग्नीषोमीयस्य प्रथमं पश्चादुपांशुयाजोत्तरमाग्नेयस्य। अत एव तत्र पाठक्रमः स्वाध्यायादावुपयुज्यते॥ ५॥१॥९॥

वचनात्तु॥ इदानीमातिदेशिकपाठक्रमापेक्षया विकृतौ मुख्यक्रमस्य बलाबलं चिन्त्यते। अध्वरकल्पायामाग्नावैष्णवमेकादशकपालं निर्वपेत्सरस्वत्याज्यभागा वार्हस्पत्यश्चरुरिति श्रुतम्। अत्र सत्यपि वाक्यत्रयेण यागत्रयविधाने, एतयैव यजेताभिचर्यमाण इति वाक्यान्तरेणाभिचाराख्यफलोद्देशेन विहितानां विधानात्त्रयाणामप्येकप्रयोगविधिपरिग्रहः।

अत्राद्यस्य यागस्य द्विदेवत्यत्वौषधद्रव्यकत्वादैन्द्राग्नाग्नीषोमीयान्यतरविध्यन्तः। केचित्तु आनाचरतद्धितान्तपदकत्वसादृश्यादग्नीषोमीयस्यैवेति वदन्ति। द्वितीयस्याज्यद्रव्यकत्वादुपांशुयाजविध्यन्तः। तृतीये एकदेवताकत्वौषधद्रव्यकत्वादाग्नेयविध्यन्तः। तत्राज्यद्रव्यक-

यागधर्मापेक्षया आग्नावैष्णवस्य धर्माः आतिदेशिकपाठमुख्यक्रमयो-रविरोधादेव प्रथमतः कार्याः । बार्हस्पत्यस्य तु मुख्यक्रमात्पश्चा-त्कार्या उतातिदेशिकपाठक्रमात्पूर्वमिति चिन्तायाम् ।

मुख्यक्रमस्यौपदेशिकप्रयोगविध्युन्नीतत्वेनौपदेशिकत्वात्तत्यत्यति-देशोत्तरकालकत्वे शरादिवद्बाधोपपत्तेर्मुख्यक्रमस्य बलवत्त्वमिति प्राप्ते ।

प्रयोगविधेरौपदेशिकत्वेऽपि स्वरूपेण मुख्यक्रमस्य कल्प्यत्वा-च्छरन्यायानुपपत्तेः कल्पनायाश्चापेक्षायामूलत्वेन प्रयोगविध्युपजीव्य-प्राथमिकातिदेशप्रापितपाठक्रमेणैवाकाङ्क्षाया उच्छेदात् श्येनादावा-तिदेशिकेनानर्लिङ्गादिवदेवातिदेशिकपाठक्रमप्रापितक्रमस्यैव बलौ-यस्त्वम् । तदेतत्सिद्धमपि चोदकस्य प्रयोगविध्यपेक्षया बलवत्त्वं स्पष्टीकरणार्थं क्रमलक्षणे पुनरुच्यते इति मन्तव्यम् ।

न चैवमाग्नावैष्णवबार्हस्पत्यधर्माणामपि प्राकृतकॢप्तक्रमेणैवाष्टाना-पत्तेर्याज्ञिकानां वैकृतमुख्यक्रमानुरोधेनाग्नावैष्णवस्य प्रथमं निर्वा-पाद्यनुष्ठानं विरुध्येतेति वाच्यम् । प्रकृतौ हि यत्र पाठादिप्रमाणकः क्रमस्तत्र तत्पदार्थानन्तरं तत्पदार्थः कार्यं इति विशिष्यैव वाक्य-कल्पनम् । मुख्यक्रमे तु लाघवाद्धर्मिग्राहकप्रमाणबलाच्चाद्यप्रधान-धर्मानन्तरमुत्तरप्रधानधर्मा अनुष्ठेया इत्येव कल्पनम् । न तु विशिष्य, न वा आग्नेयत्वादिप्रवेशः ।

अत एव विकृतावपूर्वाङ्गप्रवेशेऽपि न वाक्यान्तरकल्पनमित्यपि लाघवम् । एवं प्रवृत्तिक्रमेऽपि कॢप्तक्रमकाङ्गप्रवृत्तिक्रमेणेतरे पदार्थाः कर्त्तव्या इत्येव वाक्यकल्पनम् । अतश्च विकृतावपि आद्यप्रधान-

धर्मानुष्ठानोत्तरमेव द्वितीयप्रधानधर्मानुष्ठानमित्याग्नावैष्णवस्य प्रथमं निर्वापः पश्चाद्वार्हस्पत्यस्य । एवं साद्यस्के स्थानगम्यक्लृप्तक्रमकोपाकरणस्य वाचनिकातिदेशवत्यां कस्यांचिद्विकृतौ वाचनिकोपाकरणव्यत्यये व्यत्यस्तोपाकरणप्रवृत्त्यैव नियोजनादिक्रमः । एवं च केषाञ्चिदेतादृशविषयद्वयेऽपि याज्ञिकाचारे मूलं चिन्त्यमिति प्रकृतिक्लृप्तक्रमेणैव सिद्धान्तकरणं मूलस्योक्तत्वादुपेक्ष्यम् । अत आतिदेशिकपाठविरोध एव मुख्यक्रमादेर्दौर्बल्यमिति स्थितम् ॥ ५ ॥ १ ॥ १० ॥

विकृतिः ॥ चातुर्मास्येषु साकमेधस्तृतीयं पर्व । तत्र कार्त्तिक्यां पौर्णमास्यां काश्चिदिष्टयो विहितास्तासु वक्ष्यमाणेनैव न्यायेन यद्भ्येति वाक्यवशेनान्येष्टिवत्सद्यस्काल एवेत्यविवादम् । यानि तु द्व्यहं साकमेधेन यजेतेति वचनेन तत्पूर्वदिनकर्त्तव्यानि कर्माणि—अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेन्मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनमित्येवं विधवाक्यत्रयविहितानि, तानि किं द्व्यहकालान्युत सद्यस्कालानीति क्रमविशेषौपयिकतया सन्देहे, प्रकृतिप्राप्तत्वात् द्व्यहकालत्वम् । न सामान्यविकृतीष्टिन्यायः । तत्र हि यद्भ्येत्यादिवाक्येन साङ्गप्रयोगस्य पौर्णमास्यादिकालविधानादातिदेशिकद्व्यहकालत्वानुग्रहे च तद्बाधप्रसङ्गाद्युक्तं सद्यस्कालत्वम् । प्रकृते तु प्रातरादिकालकत्व दिनद्वयेऽपि सम्भवात् द्व्यहकालत्वमेव ।

अतश्च त्रयोदश्यां प्रातरादिकालेषु त्रयाणामप्यन्वाधानं कृत्वा चतुर्दश्यां प्रातरादिकालेषु याग इति द्रष्टव्यम् । कर्ममध्ये कर्मा

न्तरारम्भस्तु द्व्यहं साकमेधेन यजेतेति वचनादेव दुष्यति । यदि तु प्रसङ्गसिद्धिराश्रीयेत, तदाऽस्तु* त्रयोदश्यां प्रातः सकृदेवान्वाधाय चतुर्दश्यां प्रातरादिकालेषु यागाः । अङ्गानुष्ठानं तु पूर्वाङ्गानामनीकवत्या सहोत्तराङ्गानां सान्तपनीयया । गृहमेधीयस्य त्वपूर्वत्वादेव साङ्गापेक्षा । अन्वाधानं त्वाज्यभागार्थमिति द्रष्टव्यम् । केचित्तु एकादशीप्रभृतिद्व्यहकालं पृथक्प्रयोगमिष्टित्रयं पूर्वपक्षे कर्त्तव्यमिति वदन्ति । तेषां द्व्यहं साकमेधेनेति वचनानुपपत्तिरिति प्राप्ते ।

एकस्मिन् प्रातरादिकाले विहितस्य साङ्गतत्तत्प्रयोगस्य द्व्यहकालत्वपक्षे औपदेशिककालैकत्वबाधापत्तेः सद्यस्कालत्वम् । न च सायंप्रातःशब्दयोरव्ययत्वेनैकवचनान्तत्वे प्रमाणाभावः । एकवचनान्तमध्यन्दिनपदप्रायपाठादेवैकवचनान्तत्वनिर्णयोपपत्तेः । द्व्यहं साकमेधेनेति साङ्गस्यैव द्व्यहकालत्वश्रुतेश्च । अतश्च विशेषणस्यैकत्वस्य विवक्षितत्वात् सद्यस्काला एवैता इष्टयः ॥ ५ ॥ १ ॥ ११ ॥

आङ्गानां ॥ दैक्षपशौ प्रकृतितो हविरासादनोत्तरभाविनां प्रयाजानां अपकर्षस्तिष्ठन्तं पशुं प्रयजन्तीति वचनेन श्रुतः । तथा सवनीये हविरासादनोत्तरभाविनामनूयाजानामुत्कर्षः आग्निमारुतादूर्द्ध्वमनूयाजैश्चरन्तीति श्रुतः । तौ, किमुत्कर्षापकर्षौ तन्मात्रविषयावुत तदन्तस्यापकर्षस्तदादेश्चोत्कर्ष इति चिन्तायां, प्रयाजादिग्रहणस्योपलक्षणत्वे प्रमाणाभावात् पूर्वोत्तरपदार्थानां च प्रयाजाद्यनङ्गत्वेन तदुत्कर्षापकर्षयोरुत्कर्षापकर्षशङ्काऽनुपपत्तेस्तत्तत्पदार्थानां प्रधानप्रत्यासत्तिबाधापत्तेश्च तन्मात्रस्यैवोत्कर्षापकर्षाविति प्राप्ते ।

---

* इत्थमेव पाठः सर्व्वत्र । तदा सन्तु,—इति तु भवितुमुचितम् ।

प्रकृतौ पाठादिक्रमेण पदार्थानां क्लृप्तक्रमत्वात्पूर्वपदार्थोपस्थापितस्यैवोत्तरपदार्थस्यानुष्ठेयत्वावगतेः श्रुतवचनयोस्तन्मात्रविषयत्वेऽप्यनूयाजोत्तरपदार्थस्य सूक्तवाकादेरनूयाजानन्तर्यानूयाजोपस्थापितत्वादिधर्मानुग्रहलोभेनोत्कर्षः। न च प्रधानप्रत्यासत्त्यनुरोधेन तदभावः। तस्याः प्रयोगविधिना क्लृप्तप्रमाणगम्यक्रमानुरोधेनैव प्रकृताविव विकृतावपि कल्पनीयत्वात्। एवमपकर्षेऽपि प्रयाजानामाघारादिरूपपूर्वपदार्थानन्तर्यस्य तदुपस्थापितत्वस्य च बाधे प्रमाणाभावेन पूर्वपदार्थभाविनामपि तदुपपत्तेः। न चापकर्षे पूर्वभाविनां काचित् क्षतिः। प्रधानप्रत्यासत्तेः प्रकृताविवाकिञ्चित्करत्वात्। न चापकर्षे हविरासादनोत्तरक्रियमाणपदार्थस्य सामिधेन्यादेस्तदानन्तर्यतदुपस्थापितत्वादिरूपधर्मबाधापत्तेरपकर्षानुपपत्तिः। तद्बाधस्योत्तरकालिकत्वेनाविरोधात्। सामिधेनीनाञ्च प्रयाजाङ्गत्वादपि हविरासादनानन्तर्यादिबाधेऽप्यदोषः॥ ५॥ १॥१२॥

प्रवृत्त्या॥ सोमे सुत्यायां प्रातरनुवाकप्रैषं प्रातर्यावभ्यो देवेभ्यो-होतरनुब्रूहीत्येवंविधं होत्रे दत्वा प्रतिप्रस्थातः सवनीयान् निर्वपस्वेति प्रेष्यतीति प्रैषं विधाय होत्रा प्रातरनुवाके उच्यमानेऽध्वर्योरुपास्तिर्विहिता आप्रातरनुवाकसमाप्तेः। सा च वचनादेव वैकल्पिकी। ततो यत्र होतुरभिजानादभूदुषारुशत्पशुरिति तत्प्रचरण्यां स्रुचि चतुर्गृहीतं जुहोतीत्यादिना प्रचरणीहोमादिकान् पदार्थान्विधाय सवनीयहविर्विधिः। ततो बहिष्पवमानाद्यन्ते अग्नीदग्नीन्विहर बर्हिः स्तृणाहि पुरोडाशानलंकुर्विति प्रैषः समाम्नातः। तत्र सवनीयहविष्षु धानादिषु दार्शिकविध्यन्ते निर्वापप्रोक्षणादिरूपे प्राप्ते

निर्वापान्तस्य प्रैषविधानादपकर्षोऽलङ्करणादेश्चोत्कर्षोऽविवाद एव । मध्यतनानां प्रोक्षणादीनां त्वलङ्करणात्प्रागेव करणं न तु निर्वापोत्तरं, प्रधानाङ्गानां प्रचरणीहोमादीनां क्लृप्तकालत्वेन तैर्व्यवधानादिति प्राप्ते ।

प्रोक्षणादीनां निर्वापरूपपूर्वपदार्थोपस्थितानामतिक्रमे प्रमाणाभावान्निर्वापोत्तरमेव करणम् । न च सौमिकैर्व्यवधानम् । उपास्तिपक्षे तावत्प्रधानाङ्गभूतायामुपास्तावध्वर्युकर्तृकत्वस्यावश्यकत्वादतिदेशप्राप्तनिर्वापसमानकर्तृकत्वानुरोधाच्च प्रोक्षणादावितरमन्य इति न्यायेन प्रतिप्रस्थातृकर्तृकत्वावगतेः सौमिकस्य व्यवधायकत्वानुपपत्तेः ।

नैवं सति निर्वपस्वेति प्रैषे प्रोक्षणादिलक्षणापत्तिरित्यादितन्त्ररत्नोक्तदूषणावकाशः । न्यायेनैव तत्प्राप्त्यङ्गीकारेण लक्षणादावापादकाभावात् । उपास्त्यभावपक्षे तु यद्यप्यध्वर्युरेवातिदेशप्राप्तः प्रोक्षणादौ कर्तेति निर्वापेण भिन्नकर्तृकेण न शक्यते प्रोक्षणादिकमुपस्थापयितुं, तथापि अध्वर्योरपि निर्वापे प्रैषद्वारा प्रयोजककर्तृत्वेन समानकर्तृकत्वोपपत्तेर्युक्तमेव निर्वापोपस्थापितत्वं प्रोक्षणादौ । न चास्मिन् पक्षे प्रधानाङ्गप्रचरणीहोमादिभिर्व्यवधानम् । तस्याभूदुषेत्यादिप्रातरनुवाकपरिधानीयाकालकत्वेन प्रोक्षणाद्युत्तरत्वात् । प्रातरनुवाकस्यापि बहुत्वेन तन्मध्य एवैष्टिकपदार्थसमाप्त्युपपत्तेश्च ।

यत्त्वत्र तन्त्ररत्नस्वरसादन्यैरपि वक्ष्यमाणामैष्टिकपदार्थानां बहुत्वात् प्रचरणीहोमकालविधिरुपास्तिपक्षाभिप्रायेणैवेत्युक्तम् । तत् प्रचरणीहोमस्य उपास्त्यभावपक्षे कालविध्यभावे प्रतिप्रस्थातरित्यादिप्रैषोत्तरभाविपाठक्रमेण क्लृप्तक्रमकाणां प्रचरणीहोमादीनां प्रधा-

गाङ्गतया क्रमबाधे प्रमाणाभावात् प्रोक्षणादीनां सौमिकपदार्थो-त्तरत्वस्य प्रतिप्रस्थातृकर्तृकत्वस्यैव वाऽऽपत्तेरपेक्षितम्। इतरथो-पात्तिपक्षेऽपि तस्या एव प्रतिप्रस्थातृकर्तृकत्वापत्त्या प्रोक्षणादौ तद-नापत्तेश्च।

यत्तु ऐष्टिकानां बहुत्वादभूदुषेत्येतदुत्तरमपि तदापत्तेः प्रचरणी-होमकालवाक्यस्य सङ्कोच इत्युक्तम्। तदस्तु नाम तथा। तथापि यावन्त एवैष्टिकास्तत्कालावधि कर्तुं शक्यास्तावतां पूर्वं करणापत्ते-रन्येषां च तदुत्तरं प्रतिप्रस्थात्रा वा करणापत्तेर्वाक्यसङ्कोचे प्रमाणा-भावः। वस्तुतस्तु सर्वे पूर्वं कर्तुं शक्या एवेत्युक्तम् ॥ ५ ॥ १ ॥ १३ ॥

असंयोगात्तु ॥ सौमिकाग्नीषोमप्रणयनानन्तरं पश्वङ्गतया यूपं छि-नत्ति इत्युत्पन्नं यूपच्छेदनं दीक्षासु यूपं छिनत्तीत्यनेनापकृष्टं प्रधा-नन्यायेन प्राचोऽपि पदार्थानग्नीषोमप्रणयनादीनपकर्षतीति प्राप्ते।

भिन्नप्रयोगविधिपरिगृहीतत्वेनाच पाठस्य क्रमानियामकत्वा-न्महाप्रयोगविध्यैक्येऽपि वा उत्पत्तिविधिवेलायां प्रयोज्यत्वानवगमेन क्रमानाकाङ्क्षत्वात् पाठस्य क्रमाकल्पकत्वेन बहुक्रमत्वाभावाद्दीक्षा-कालविधिवाक्ये च प्रयोज्यत्वावगमेन, तत्रैव क्रमापेक्षतया भिन्न-प्रयोगपरिगृहीतैरपि सोमाङ्गदीक्षाकालीनपदार्थैः पाठेन क्रम-कल्पनात्तत्रैव सप्तहोतृहोमानन्तरं यूपच्छेदनमात्रं यूपोत्पादकधर्म-मात्रं वाऽपकृष्य कार्यं, न तु तदन्तापकर्षः। एतेन यूपच्छेदनस्य दीक्षान्ते करणमिति केषाञ्चिदुक्तमपास्तम्। दीक्षासु यूपं छिनत्ती-त्यस्य सप्तहोतृहोमानन्तरं पठितत्वात् ॥ ५ ॥ १ ॥ १४ ॥

प्रासङ्गिकञ्च ॥ सवनीयपशुतन्त्रं सवनीयहविःषु प्रसज्यते, देव-

पशुतन्त्रञ्च पशुपुरोडाशे इति वक्ष्यते। प्रसङ्गे च ये उपकाराः प्रयाजानूयाजादिजन्यास्तन्त्रितो लब्धास्तज्जनकीभूतपदार्थांशे नातिदेशापेक्षा। ये तु न लब्धा आज्यभागपिष्टलेपफलीकरणहोमादिजन्यास्तत्पदार्थांशेऽस्त्येवातिदेश इत्यपि वक्ष्यते। तदिह पाशुकानूयाजानां दैक्षे हृदयादियागोत्तरत्वात् सवनीये चाग्निमारुतशस्त्रोत्तरत्वात्तत्पूर्वभाविसवनीयहविःपशुपुरोडाशादीनामङ्गभूताः पिष्टलेपफलीकरणादिहोमाः किमनूयाजोत्तरं उत्कर्ष्टव्या उत नेति चिन्तायाम्। प्रकृतौ दर्शपूर्णमासयोः पिष्टलेपफलीकरणहोमानां परप्रयुक्तानूयाजैरेव बद्धक्रमत्वादिहापि सत्यपि भिन्नप्रयोगविधिपरिग्रहे अङ्गभूतस्यान्याङ्गभूतानूयाजोत्तरत्वस्यापि सम्भवेनोत्कर्षे प्राप्ते।

न तावदिहकृतावेव क्रमक्लृप्तिः। भिन्नप्रयोगविधिपरिग्रहात्। पुरोडाशादिप्रयोगविधिना विहितानां पिष्टलेपफलीकरणहोमेडाभक्षणानां व्यवधायकाभावविशिष्टप्रकृतिदृष्टपौर्वापर्यस्य क्रमकल्पकत्वेनोत्कर्षे तत्क्रमबाधप्रसङ्गाच्च। पाशुकप्रयोगविधिविहितानां समिष्टयजुःपत्नीसंयाजानामुक्तप्रमाणेनैव क्रमक्लृप्तेस्तद्बाधस्यापि प्रसङ्गाच्च। नापि प्रकृतितोऽनूयाजोत्तरत्वक्लृप्तिः। प्रकृतौ हि पाठकल्पितवाक्येन क्रमनियम एव विधीयते, न तु क्रमोऽपि। तस्य प्रयोगविध्याक्षेपादेव प्राप्तेः। अतस्य प्रकृते भिन्नप्रयोगविधिपरिगृहीतानां सामान्यतः क्रमस्याप्राप्तौ तदाश्रितस्य नियमस्याप्राप्तिः। न च्याक्षेपात्पूर्वमेवावघातविधिवत्प्रवृत्त्यङ्गीकारेण कल्पितवाक्यस्य क्रमविधायकत्वमेवेति शक्यं वक्तुम्। तदिह पाठकल्प्यस्य विधेः

क्लृप्तत्वाभावेन समानतया आक्षेपप्रतिबन्धायोगात्। इतरथा दधियागपयोयागयोरपि पाठेन क्रमापत्तेः। अतश्च प्रकृतेऽप्यनूयाजोत्तरत्वस्याप्राप्तेः पुरोडाशशकलेडाभक्षणोत्तरमेव पिष्टलेपफलीकरणहोमौ ॥ ५ ॥ १ ॥ १५ ॥

तथाऽपूर्वम् ॥ दर्शपूर्णमासयोर्हविरभिवासनोत्तरं वेदिकरणमाम्नातम्। तस्य च पूर्वेद्युरमावास्यायां वेदिं करोतीति वचनेनापकर्षः अतः पूर्वभाविनोऽपि हविरभिवासनादीनपकर्षेत्। एकप्रयोगविधिपरिगृहीतत्वेन पाठस्य क्रमकल्पकत्वात्। अमावास्यापदस्य कर्मपरत्वे लक्षणाप्रसङ्गेन कालपरत्वावसायाद्धविरभिवासनोत्तरभाविवेदिकरणविधेरेव पौर्णमासाङ्गताबोधकत्ववद्दर्शाङ्गताबोधकत्वाच्च। न च कालद्वयविधाने वाक्यभेदः। सामर्थ्यादिदं कृत्वा वेदिं करोतीति श्रुतवेदकरणानन्तर्यबलेनैव च पूर्वेद्युष्ट्वस्य प्राप्तत्वेनानुवादात्। प्रधानप्रत्यासत्तिलाभात् पौर्णमासस्यातीतत्वाच्च दार्शिकवेदिकरण एवायं विधिः। अतश्च पौर्णमाससाधारण्येन पाठस्य क्रमकल्पकत्वावश्यम्भावात्। अत एव च यूपच्छेदनवैलक्षण्यात्तदन्तापकर्षे प्राप्ते।

कालपरत्वेऽपि कालविधेः प्रयोगविधित्वेन दार्शिकवेदिकरणस्य तत्रैव प्रयोज्यत्वावगमात्तदवगमोत्तरञ्च क्रमापेक्षायां पाठस्य नियामकत्वासम्भवाच्छ्रौतक्रमान्तरसत्त्वाच्च न हविरभिवासनेन बद्धक्रमत्वम्। अतश्च पाठोऽपि परिशेषात् पौर्णमासविषय एव। यदि तु खण्डपर्वणि चतुर्दश्यां प्रातरग्न्याधानदिने वेदिकरणसिद्ध्यर्थं लक्षणामप्यङ्गीकृत्यामावास्यापदेन कर्मैवोच्येत, तदा दार्शिकवेदिकरणस्याप-

मेव विनियोगविधिरिति हविरभिवासनेन दार्शिकवेदिकरणस्य सुतरां न सन्दक्रमता । न चैवं पूर्वेद्युःकालविशिष्टवेदिकरणस्य दर्शाङ्गतया वाक्येन विनियोगात् प्रकरणेन पौर्णमासाङ्गत्वायोगः । वेदेः सर्वसाधारण्येन तत्करणस्याप्यङ्गतयाऽपेक्षासद्भूतपौर्णमासप्रकरणेन गर्दभाभिधान्यां आदानस्येवाक्षेपोपपत्तेः । अत एव वाक्येन श्रुत्या वोभयत्र न प्रकरणस्यार्थाक्षेपस्य वा बाधः । तयोः पूर्वेद्युःकालमन्त्ररूपगुणमात्रविधिफलकतया क्रियाविधिफलकत्वाभावात् । अतो न प्रकृते तदन्तापकर्षः ॥ ५ ॥ १ ॥ १६ ॥

सान्तपनीया ॥ दैवान्मानुषाद्वा प्रतिबन्धान्मध्यन्दिने क्रियमाणसान्तपनीयाया उत्कर्षे स्वकालेऽग्निहोत्रहोमः कर्त्तव्यो न वेति चिन्तायां, स्वकालकरणे सान्तपनीयायां प्रणीतस्याग्नेः* पुनः प्रणयनासम्भवान्मन्त्रवत्प्रणयनलोपेन वैगुण्यापत्तेः कालस्य च पदार्थगुणत्वेन प्रयोगविधिविविशेषणतयोत्तरकालप्रतीतिकत्वेन च लोपेऽपि वैगुण्याभावादुत्कर्ष इति प्राप्ते ।

अनुपादेयत्वात्कालस्य नित्ये यथाशक्ति उपादेयाङ्गत्यागस्यैव तदनुरोधेन षष्ठे वक्ष्यमाणत्वात् प्रणयनलोपेनापि कालानुग्रह एव न्याय्यः । कालस्य निमित्तविशेषणत्वेन सुतरामनुग्राह्यत्वाच्च । वस्तुतस्तु अग्निहोत्रस्यान्यतः प्रणयनजन्योपकारलाभे तदनाक्षेपकत्वस्य दर्शादौ क्लृप्तत्वात्तल्लोपेऽपि न वैगुण्यम् । अतः स्वकाल एवाग्निहोत्रं हुत्वा

* प्रणीतस्याग्नेः,—इत्यादर्शपुस्तकेष्वशुद्धः पाठो लिपिकरप्रमादज इत्यनुमीयते ।

सान्तपनीया कर्त्तव्येति सान्तपनीयाङ्गानां नैव क्रम आदरणीयः। अत्र च सान्तपनीयेत्युपलक्षणं प्रारब्धकर्ममात्रस्य, अग्निहोत्रेत्यपि आवश्यकमात्रस्य। अनावश्यकविषये अपवाद* एतद्यस्य छिद्यते यदन्यस्य तन्त्रे वितते ऽन्यस्य तन्त्रं प्रतायत इति निषेधात्। न चैवमनीकवत्युत्कर्षेऽपि मध्यन्दिने सान्तपनीयाऽऽपत्तिः। तथात्वे सान्तपनीयाया अनीकवत्युत्तरकालत्वैकप्रयोगविध्यवगतस्य प्रणयनस्य च बाधेन वरमेकस्यैव मध्यन्दिनकालस्य बाधात्।

केचित्तु निमित्तविशेषणीभूतकालस्यैवानुपादेयत्वं न तु कालमात्रस्येत्यङ्गीकृत्य सान्तपनीयायाः काम्यवन्मध्येऽनावश्यकत्वादकरणमिति वदन्ति। तन्न चातुर्मास्यानामपि नित्यत्वान्मध्यन्दिनस्यापि निमित्तविशेषणत्वापत्तेरुपेक्षितम् ॥ ५ ॥ १ ॥ १७ ॥

षोड़शी ॥ दैवान्मानुषाद्वाऽपराधादेवोक्थ्येषूत्कृष्टेषु षोड़श्युत्कृष्यते न वेति चिन्तायां, समयाध्युषिते सूर्ये षोड़शिनस्तोत्रमुपाकरोतीति वचनविहितसमयाध्युषितकालबाधे प्रमाणाभावादुत्कर्षः। न च तं पराञ्चमुक्थ्येभ्यो गृह्णाति षोड़शिनमिति वचनेन ग्रहणे उक्थ्यपरभावस्य विहितत्वात् स्तोत्रस्य च ग्रहं वा गृहीत्वेति वचनेन ग्रहग्रहणोत्तरकालत्वात्तदनुरोधेन समयाध्युषितकालबाधः। तं पराञ्चमित्यनेन षोड़शिग्रहयागाभ्यासस्यैवोक्थ्यपरभावविधानेन ग्रहग्रहणस्य स्तोत्रपूर्वकालत्वेऽपि बाधकाभावात्। अतएवात्र गृह्णाति

* इत्ययमेव पाठः सर्व्वत्र। मम तु अप वा,—इति पाठः प्रतिभाति। वै,—इति प्रतिज्ञाद्योतकोनिपातः। अपच्छिद्यते इति व्यवहितेन संबन्धः।

निर्वपतिवद्यागपर एव* । अस्तु वा ग्रहणपरस्तथापि तैत्तिरीय-शाखायां षोड़शिनः सवनत्रयेऽपि आम्नानात्सवनान्तरविषयकं तं पराञ्चमिति वाक्यम् । अस्तु वैतदपि सर्वविषयं, तथापि ग्रहं वेत्यस्य सामान्यविषयत्वादुक्थ्योत्तरकालं ग्रहणेऽपि समयाध्युषिते स्तोत्रकरणे न कश्चिद्विरोधः ।

यदि तु सामान्यविशेषरूपबाधस्य यथावस्थितशास्त्रार्थविषय-त्वेन दैवाद्यपराधे अप्रवृत्तेः सर्वपदार्थानां तुल्यबलत्वमुच्यते । तथा-प्युक्थ्यपरभावस्य क्रमत्वेनोपादेयत्वात् पूर्वाधिकरणन्यायेन बाधोप-पत्तेः समयाध्युषितकालानुग्रहो न्याय्य एव । न च कालस्याङ्गाङ्ग-त्वेन प्रधानाङ्गक्रमापेक्षया दौर्बल्यम् । उभयोरप्यङ्गाङ्गत्वात् । न च ग्रहणस्याचावदानवत् प्रदानोपक्रमता । तद्वदिष्टैकपदार्थत्वाभावा-दिति प्राप्ते ।

ग्रहणस्य षोड़शियागाभ्यासकल्पकत्वेनान्तरङ्गत्वात्तत्क्रमस्य प्राब-ल्यम् । वस्तुतस्तु तं पराञ्चमित्यस्यापि कालपरत्वमेवेत्यन्तरङ्गतद्बा-धोन्याय्य एव । न च ग्रहणस्योत्तरकालं करणेऽपि स्तोत्रस्यैव काला-नुग्रहः शङ्क्यः । तथात्वे स्तोत्रग्रहणोत्तरकालत्वस्य प्रधानप्रत्यासत्तेश्च बाधप्रसङ्गेनैकस्यैव समयाध्युषितकालबाधस्य न्याय्यत्वात् । अतस्त-स्याप्युत्कर्ष इति सिद्धम् ॥ ५ ॥ १ ॥ १८ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

पञ्चमस्य प्रथमपादः ॥

---

* इत्यमेव पाठः सर्वत्र । मम तु, ग्टह्णाति निर्वपतिवद्यागपर एव,—इति पाठः प्रतिभाति ।

# अथ पञ्चमोऽध्यायः।

## द्वितीयः पादः।

सन्निपाते ॥ यत्रानेकेषां प्रधानानामङ्गानां वा एकेन प्रयोगविधिनोपसङ्ग्रहात् साङ्गानां साहित्यावगमः, तत्र दर्शपूर्णमासप्राजापत्यादौ किं एकस्य प्रधानस्य सन्निपत्योपकारकाङ्गकाण्डं कृत्वेतरस्य कर्त्तव्यमित्येवं काण्डानुसमयोऽथ वा एकैकमङ्गं एकैकस्य कृत्वेतरस्य कर्त्तव्यमित्येवं पदार्थानुसमय इति चिन्तायां, प्रधानप्रत्यासत्त्यनुग्रहात् प्रकृतितः परस्परसंश्लिष्टानामेवोपाकरणनियोजनादीनामेकैकस्मिन् पशौ प्राप्तत्वाच्च काण्डानुसमयः। एकप्रयोगत्वञ्च आरादुपकारकाङ्गाभिप्रायेणेति न कश्चिद्विरोध इति प्राप्ते।

प्रत्यक्षवचनेनैकस्मिन् काले साङ्गानां सर्वेषां प्रयोगविधानात् प्रधानसाहित्यवदङ्गेष्वपि साहित्यावगमादेकैकाङ्गेन सर्वप्रधानानां युगपदुपकर्त्तव्यमित्यर्थावगमेनैकमुपाकरणाख्यमङ्गं सर्वपशूनां कृत्वा नियोजनं कार्य्यम्। प्रधानप्रत्यासत्तिस्तु प्रत्यक्षवचनावगतोक्तसाहित्यानुरोधेनैव कल्पनीया। उपाकरणानन्तरमेव च नियोजनमिति यथाप्रकृत्येवानुष्ठानम्। आवृत्तानामावृत्तत्वं तु प्रधानसाहित्यानुरोधेनेति न कश्चिद्विरोधः। अतः पदार्थानुसमयः। प्रवृत्तिक्रमविचारस्त्वेतदधिकरणोत्तरं द्रष्टव्यः ॥ ५ ॥ २ ॥ १ ॥

कारणात् ॥ यत्र तु प्रधानविरोधो यथाऽश्वप्रतिग्रहेष्ट्यां शते सहस्रे वाऽश्वदाने तावत्सु पुरोडाशेषु श्रप्यमाणेषु यदि सर्वेषा-

मधिश्रयणं हत्वोद्वासनं क्रियेत, ततो दृष्टेरम्। अतस्तत्र काण्डानु-
समय एव कतिपयाङ्गानाम्।

यत्त्वत्र वार्त्तिके निमित्तगतस्य यावत्त्वस्याविवक्षितत्वान्नैमित्तिक-
गतस्य च तावत्त्वबहुत्वादेः पृष्ठग्रमनीयन्यायेनानुवाद्यगतत्वेनाविव-
क्षितत्वात्साहित्यबोधकवचनाभावेनानेकेष्वपि अश्वदानेषु प्रत्येक-
प्रयोगेनैव वारुणेष्टिकर्त्तव्यत्वावगतेर्भाष्यस्थमेतदुदाहरणं साहित्य-
बोधकवचनान्तरसम्भावनयेत्युक्तम्।

तन्न। सचादुदवसाय पृष्ठग्रमनीयेन यजेरन्नित्यत्र हि उद-
वसानसमानकर्त्तृकत्वबलेनैव पृष्ठग्रमनीये बहुत्वादेः प्राप्तत्वाद्युक्ता
साहित्यविवक्षा। प्रकृते तु निमित्तसमसङ्ख्याकत्वस्यैव तावच्छब्दा-
र्थस्य नैमित्तिकविशेषणतया अप्राप्तस्य विधेयत्वाद्युक्तमेवानेक-
निमित्तसन्निपाते नैमित्तिकसाहित्यम्। तावच्छब्दाभावे हि
युगपदनेकनिमित्तसन्निपाते तन्त्रेण नैमित्तिकेष्टिरेकैव प्रसज्येतेति
युक्त एव तावच्छब्दार्थविधिः।

यद्यपि हि पुरुषार्थतया न क्रत्वन्तःपातित्वं यथा युगपदनेक
चाण्डालादिस्पर्शादावनेकगटहदाहादौ च, तथापि नैमित्तिकस्य
सकृदनुष्ठानं। किमुत क्रतुप्रयोगमध्यवर्त्तितदङ्गवारुणीष्टेः। अतश्चा-
ग्नेयादिभेदेऽपि प्रयाजाद्यङ्गतन्त्रत्ववद्युगपदनेककपालभेदने होम-
तन्त्रत्ववच्च वारुणीष्टेस्तन्त्रत्वप्रसक्तौ निमित्तसमसङ्ख्याकत्वविधानेन
तावत्त्वप्रतीतावपि एकप्रयोगविधिपरिगृहीतत्वेन साहित्यप्रतीतेर्युक्त-
मेवोदाहरणत्वम्।

तत्र चारादुपकारकेषु बहुधा प्रसङ्ग एव। सन्निपातेषु बहुधा

पदार्थानुसमय एव । क्वचिदेव तु प्रधानविरोधे काण्डानुसमयः । प्रधाने तु सम्प्रतिपन्नदेवताकत्वात्तन्त्रत्वमेव । पुरोडाशमात्रे तु निमित्तसमसङ्ख्याकत्वं प्राजापत्यवदिति द्रष्टव्यम् ॥ ५ ॥ २ ॥ २ ॥

मुष्टि ॥ पदार्थानुसमयप्रसङ्गात् क्रियानेकः पदार्थ इति चिन्त्यते । किमेकैकमुष्टिनिर्वाप एकः पदार्थस्तेन चाग्नेयाग्नीषोमीयनिर्वापयोरनुसमयः, किं वा चतुर्मुष्टिनिर्वाप एकः पदार्थस्तावता चानुसमयइति चिन्तायाम् । एकैकमुष्टिनिर्वापे यत्नसमाप्तेर्मन्त्रसत्त्वाच्च तस्यैवैकपदार्थत्वमिति प्राप्ते ।

अङ्गपर्यायः पदार्थशब्दस्तस्यैव प्रयोगविधिना विधानात् । विहितस्य चाङ्गत्वम् । न चैकमुष्टिनिर्वापोविहितः, किन्तु चतुर्मुष्टिनिर्वापएव । चतुरश्चतुरोमुष्टीन् निर्वपतीति विधानात् । अत्र हि अर्थप्राप्तनिर्वापानुवादेन न गुणमात्रविधानम् । संख्यामुष्ट्युभयविधाने वाक्यभेदात् । पुरोडाशमात्रपर्याप्तव्रीहिमतः पृथक्करणरूपनिर्वापस्य नियमेनाप्राप्तत्वाच्च । अतश्चतुर्मुष्टिनिर्वापेनैवानुसमयः । अत एव वीप्साऽप्युपपद्यते ।

एवं कपालान्युपदधाति* अष्टौ दक्षिणत एकादशोत्तरत इति संख्यादिविशिष्टोपधानविधानात् सर्वकपालोपधानेनानुसमयः । यद्यपि कपालगतबहुत्वमुद्देश्यविशेषणत्वादविवक्षितं, तथापि अष्टत्वादिसंख्याया उपधानविशेषणत्वादिवक्षोपपत्तिः । यद्यपि च तत्तन्मन्त्रादिभेदादेकैकोपधानविधिरपि कश्चिदुन्नाय्येत, तथापि

---

* भाष्ये तु, कपालानुपदधाति,—इति पाठः ।

वक्ष्यमाणकृष्णाजिनास्तरणन्यायेनैकपदार्थत्वं सर्वोपधानस्य द्रष्टव्यम्।
अतः आग्नेयस्य सर्वाण्युपधायाग्नीषोमीयस्योपधेयानि।

एवं द्विर्हविषोऽवद्यतीत्यत्रापि द्वित्वविशिष्टावदानविधानाद्विर-
वदानेनानुसमयो न त्वेकैकावदानेन। न च मध्यादवद्यति पूर्वार्धा-
दवद्यतीति वाक्याभ्यामेव द्विरवदानप्राप्तेस्तद्विधिवैयर्थ्यम्। एत-
द्विध्यभावे चतुरवत्तवाक्यस्य चतुःसंख्या मध्याद्भिः पूर्वार्धाद्भिरित्येवं
हविष एव सम्पाद्येत। एतत्सत्त्वे तु तद्विरोधादुपस्तरणाभ्यभि-
घारणाभ्यामिति तद्वाक्यस्था चतुःसंख्याऽनुवाद एव।

इदञ्च साम्नाय्यविषयं द्विरवदानानुसमयकथनम्। आग्नेया-
दावन्दानादिप्रदानान्तेनानुसमयस्य वक्ष्यमाणत्वात्। साम्नाय्ये
तूपस्तरणाभिघारणयोस्तन्त्रत्वाद्दध्नोऽप्यवदानं गृहीत्वा पयसोग्राह्यम्।
कल्पसूत्रेषु तु पयसोऽप्यवदानं गृहीत्वा पश्चाद्दध्न इत्युक्तम्। तैत्ति-
रीयश्रुतौ तादृशक्रमस्य वाचनिकत्वात्। होमस्तन्त्रेणैव सम्प्रतिपन्न-
देवताकत्वात्।

एवमञ्जनाभ्यञ्जनपवनपावनेष्वपि तत्तद्विधिसत्त्वान्नैकैकेन नेत्रेण
शरीरावयवेन वाऽनुसमयोऽपि तु अनेकयजमानकेऽहीने एकच-
नेत्रद्वयेऽप्यञ्जनं कृत्वा यजमानान्तरे तत्कार्यम्। सर्वावयवोपेताभ्य-
ञ्जनादिना च प्रत्येकमनुसमयः। सत्रे त्वध्वर्युर्गृहपतिं दीक्षयि-
त्वेत्यादिना तत्तत्संस्कारकदीक्षोत्तरकालत्वविधानात् काण्डानु-
समय एव ५॥२॥२॥

संयुक्ते॥ साम्नाय्यवदाग्नेयाग्नीषोमीयादौ भिन्नदेवत्येऽपि द्व्यव-
दानेनानुसमय इति प्राप्ते।

चतुरवत्तं जुहोतीत्यनेनावत्तोद्देशेन होमाख्यसंस्कारविधानादर्थादेवावदाने प्राप्ते द्विर्हविषोऽवद्यतीत्यनेन द्वित्वमात्रविधानादुक्तविधचतुरवत्तहोमस्यैवैकपदार्थत्वेनावदानादिप्रदानान्तेनानुसमयः। वस्तुतस्तु अवत्तस्योद्देश्यत्वेन ततः पूर्वमवदानप्राप्तेर्दुरुपपादत्वाद् द्व्यवदानवाक्ये चावदानमात्रे द्वित्वविधानेऽलङ्करणाद्यर्थाज्यावदानेऽपि स्रुववद्द्वित्वप्राप्त्यापत्तेर्हविरुद्देशेनैव द्वित्वविधाने होमादावपि तदापत्तेर्हविर्विशिष्टोद्देशेन तद्विधाने च वाक्यभेदापत्तेरवश्यं द्वित्वविशिष्टावदानविधिस्वीकारेऽपि उपस्तरणादिनिधिन्यायेन दृष्टार्थत्वलाभाय चतुरवत्तहोमविध्युपपादकत्वस्याप्यङ्गीकारादवदानादिप्रदानान्तस्यैवैकपदार्थत्वावगमेन तेनैवानुसमयः ॥ ५ ॥ २ ॥ ४ ॥

वचनात्तु ॥ यूपधर्माञ्जनोच्छ्रयणसम्मानपरिव्याणादयो यूपगणेऽतिदेशप्राप्ताः पृथक्पदार्था अपि न प्रत्येकमनुसमेयाः। अञ्जनादिपरिव्याणान्तं यजमानो यूपं नावसृजेदिति प्रकृतावनवसर्गस्य विहितस्येहाप्यतिदेशात्। न चानेन रागप्राप्ते कादाचित्कयूपसंयोगे सति त्यागनिषेधविधिः। पाक्षिकत्वाद्यापत्तेः। अपि तु संयोगाभावाभावरूपसंयोगाख्यस्यानवसर्गस्यैव साहायार्थं नियमविधिः। अतश्च तदनुरोधेन सत्रातिरिक्ते यूपगणे तावत्काण्डस्यानुसमयः। सत्रे तु येन केनापि यजमानेन धारणसम्भवात् पदार्थानुसमय एव। अन्यत्रापि तावदतिरिक्तपदार्थानां प्रत्येकमेवानुसमयः ॥ ५ ॥ २ ॥ ५ ॥

पशुगणे ॥ प्रकृतौ साम्नाय्येऽवदानादिप्रदानान्तस्यैकपदार्थत्वादतिदेशेन दैक्षेऽपि तथैव प्राप्तौ, दैवतान्यवदाय न तावत्येव होतव्यं, सौविष्टकृतान्यवद्यति, सौविष्टकृतान्यवदाय न तावत्येव होतव्यं,

ऐडान्यवद्यतीति* वचनेन क्रमान्यत्वविधायिना पदार्थभेदावगतिः। न असम्बन्धिपदार्थान्तरव्यवधाने प्राकृतैकपदार्थता सम्पद्यते। अतस्रैकदेवत्ये पशुगणे प्राजापत्यन्यायेन दैवतावदानादिना प्रत्येकमनुसमयः। अन्ते च तन्त्रेण दैवतहोमः।

न च प्रकृतावेकस्य पशोर्दैवताद्यवदानत्रयमानन्तर्येण कृतमितीहापि तथैव कार्यमिति शक्यम्। प्राजापत्यन्यायेनैव पश्वेकत्वस्य प्रकृतावार्थिकत्वेन चोदकविरोधाभावात्। अत एव यत्र विभिन्नदेवताके पशुगणे चोदकविरोधस्तत्रावदानत्रयं होमश्चैकस्य कृत्वाऽपरस्याप्यवदानत्रयपूर्वकप्रदानान्तं कार्यम्। स्विष्टकृदिडाभक्षणे तु तन्त्रेणैव; तत्रापि पदार्थानुसमये द्वितीयहोमस्यातिदेशप्राप्तैडावदानानन्तर्यबाधापत्तेः।

वस्तुतस्तु असम्बन्धिपदार्थान्तरव्यवधानेऽपि पश्चावत्तहोमसम्पादकत्वेन दैवतावदानस्यात्रापि प्रदानावयवत्वोपपत्तेर्विभिन्नदेवताकस्थलेऽपि दैवतावदानादिप्रदानान्तेनानुसमयः। एकदेवताके तु पदार्थावयवानामेवानुसमय इति न कोऽपि विरोधः॥५॥२॥६॥

नानाबीजेषु॥ राजसूये, अग्नये गृहपतयेऽष्टाकपालं कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकञ्चरुमिति नानाबीजेष्टिराम्नाता। तत्रातिदेशप्राप्तानि कृष्णाजिनास्तरणोलूखलाधिवर्त्तनबीजावापाद्यवघातपरावपनविवेचनफलीकरणपात्र्यधिकरणकतण्डुल-

---

* इत्थमेव पाठः सर्व्वत्र। भाष्ये तु, दैवतान्यवदाय न तावत्येव होतव्यं सौविष्टकृतान्यवदेयानि सौविष्टकृतान्यवदाय न तावत्येव होतव्यं ऐडान्यवदेयानि,—इति प्रकृतौ श्रूयते, इत्युक्तम्।

प्रक्षालनानि तत्तद्विधिविहितत्वेन पृथक्पदार्थत्वात् प्रत्येकमनुषमेयानि। न चात्र स्रुवदानस्यावत्तहोमविध्याच्छिन्नत्ववत्सर्वेषामवघातविध्याच्छिन्नत्वं, येनैकपदार्थत्वं प्रसज्येत। तद्व्यतिरेकेणापि अवघातसम्भवात्। नापि सर्वेषामवघातपदार्थत्वम्। उलूखलमुसलसंयोगविशेषस्यैव सर्वौषधावघातवत्तत्पदार्थत्वात्। अतः प्रत्येकानुषमये प्राप्ते।

तत्तद्विधिविधेयत्वेऽपि पृथक्पदार्थत्वे अदृष्टार्थत्वापत्तेः सर्वेषामेषां तण्डुलनिष्पत्तिफलकावघातविधिविशेषत्वेनैव विधेयत्वादेकपदार्थत्वावगतेस्तावताऽनुषमयः। एवं सत्युलूखलमपि एकमेवेति सिध्यति, पात्री च। इतरथा हि कृष्णाजिनमुसलशूर्पाणां एकत्वेनोपकारकत्वसम्भवेऽप्युलूखलपात्र्योर्भेदावश्यंभावात्। तस्मात् कृष्णाजिनास्तरणादिप्राग्भिन्ने तत्प्रक्षालननिनयनान्तेनानुषमयः। उत्करे तत्प्रतिपत्तिस्तु तन्त्रेणैवेति विवेकः। एवं कृष्णाजिनास्तरणादिपेषणान्तेन तस्याप्यनुषमयः। तेषामपि पेषणविध्येकवाक्यतया एकपदार्थत्वात्।

नन्वत्र किमनुषमेयपदार्थानां पदार्थत्वम्? न तावदनुष्ठेयत्वम्, एकमुष्टिनिर्वापादावतिव्याप्तेः। नापि विहितत्वघटितमङ्गत्वम्, द्रव्यादावतिव्याप्तेः। नापि क्रियात्वविशेषितं तत्, उपस्तरणकृष्णाजिनास्तरणादावतिव्याप्तेः। नापि परामवयवत्वे सति निरुक्तं क्रियात्वम्, अवयवत्वस्यापि निर्वक्तुमशक्यत्वात्। दृष्टविधया क्रियान्तरोपकारकत्वमिति चेत्। अवघातस्यापि दृष्टविधया यागपेषणाद्युपकारकत्वेनावयवत्वापत्तावघातादिपेषणान्तेनानुषमयापत्तेः। अवघातकालीन-

तदङ्गजपादिमन्त्राणामदृष्टविधयोपकारकत्वेनावयवत्वानापत्तेश्च। किं च सत्यप्यवयवत्वे कृष्णाजिनास्तरणोपस्तरणादीनां विहितत्वेनाङ्गत्वात् प्रयोगविध्युपसङ्ग्रहेण साहित्यावगतेः प्रत्येकानुसमयः किं न स्यात्। एवं ध्रुवदानस्यापि होमवद्धविःसंस्कारकत्वात्पेषणावघातन्यायेन प्रत्येकानुसमयः किं न स्यादिति चेत्।

न। सत्यपि कृष्णाजिनास्तरणादीनां स्वतन्त्रविधिविधेयत्वे अङ्गत्वेन प्रयोगविधिप्रयोज्यत्वे वा अवघाताद्यङ्गत्वेन तद्द्वारैव प्रयोज्यत्वावगमात्तदनुसमयेनैवानुसमय इति न प्रत्येकमनुसमयः प्रत्येकं साहित्यानवगतेः। एवं, परावपनादिप्रक्षालननिनयनान्तानामपि तण्डुलरूपावघातफलोपयोगितयाऽवघातार्थत्वान्न पृथक्पदार्थता। अत एवादृष्टार्थमपि तदङ्गं न पृथक्पदार्थः। एवमुपस्तरणादेरपि स्रुच्यसंसर्गद्वारा होमार्थत्वान्न स्वातन्त्र्येण प्रयोज्यतेति न पृथगनुसमयः। ध्रुवदानस्य तु हविःसंस्कारकस्याप्यवत्तोद्देशेन होमविधानाल्लाघवेनावत्तहोमस्यैव प्रयोज्यत्वेऽवदानांशेऽपि पृथक्प्रयोज्यत्वाकल्पनान्न पृथक्पदार्थत्वम्। अत एव पदार्थत्वं नाम स्वातन्त्र्येण प्रयोगविधिविधेयत्वम्। पदार्थावयवत्वेन सम्मतानां हि कृष्णाजिनास्तरणादीनां नावघातादिनिष्ठप्रयुक्तिविषयत्वज्ञानं विना प्रयुक्तिविषयत्वं ज्ञायते। अवघातादीनां तु नान्यनिष्ठप्रयुक्तिविषयत्वज्ञानोत्तरकालत्वनियतन्तज्ज्ञानम्। प्रयोगविधिनाऽङ्गप्रधानोभयविशिष्टभावनाप्रयुक्तिज्ञापनेनाङ्गप्रयुक्तेरपि प्रधानप्रयुक्त्यन्यथानुपपत्तिप्रसूतत्वाभावात्। अतश्च यत्प्रयुक्त्यन्यथानुपपत्तिं विनैव यत्प्रयुक्तिविषयत्वज्ञानं, स ततः पदार्थान्तरमिति सिद्धम्॥ ५॥ २॥ ७॥

विकारे॥ दैचे पश्वावनूयाजानां पृषदाज्येनानूयाजान्यजतीति पृषदाज्यं श्रुतम्। प्रयाजानां शुद्धमेवाज्यं प्रकृतिप्राप्तम्। प्रकृतौ चोपभृत्येकस्मिन्नेव पात्रे प्रयाजाङ्गभूतं चतुर्गृहीतं गृहीत्वा तस्मिन्नेव कालेऽनूयाजार्थं चतुर्गृहीतं गृहीतमासीत्। अत्रापि तथैव ग्रहणे प्रयाजाज्यस्य दधिसंसर्गेणोत्पवनावेक्षणयोरदृष्टार्थत्वप्रसङ्गेनाप्राकृतकार्यकारिताऽऽपत्तेः। समानयनवेलायां प्रयाजाज्यस्य न्यूनत्वापत्तेश्च। अतोऽवश्यं पात्रैकत्वमनुगृह्य क्रमो बाध्यतां, विपरीतं वेति चिन्तायाम्।

पात्रैकत्वस्य श्रुतत्वात् पदार्थत्वाच्च बाधानुपपत्तेः क्रमस्यैव मन्त्रपाठकल्प्यत्वेन पदार्थगुणत्वेन च दौर्बल्याच्छिष्टाकोपाधिकरणन्यायेन बाधः। एवमष्टावुपभृतीत्येतद्वाक्यावगतचतुष्कद्वयसाहित्यबलकल्प्यैककालत्वस्यापि। न च प्रकृतौ तयोः क्लृप्तकल्प्यत्वादिना बलाबलेऽपि विकृतावतिदेशेन प्राप्तयोस्तयोः समत्वाच्च बलाबलमिति ग्राह्यम्। क्लृप्तकल्प्यत्वादिरूपबलाबलस्य विकृतावसम्भवेऽपि पदार्थतद्गुणत्वादिकृतबलाबलस्य विकृतावपि नियामकत्वोपपत्तेः। सम्भवति च विकृतौ नियामकान्तरासत्त्वे प्राकृतस्यापि बलाबलस्य सप्तदशशरावे चरौ चतुःसंख्यामुष्टिनिष्ठप्राथम्यजघन्यत्वस्येव नियामकता। अतस्तस्मिन्नेव पात्रे अनूयाजकरणवेलायां पृषदाज्यग्रहणमिति प्राप्ते।

पात्रैकत्वस्य पदार्थत्वेऽपि अनुष्ठेयपदार्थमात्रवृत्तिक्रमस्य तद्धर्मत्वाभावात् प्रत्युत साक्षाद्ग्रहणाङ्गभूतक्रमकालाद्यपेक्षया ग्रहणाङ्गभूतपात्राङ्गत्वैकस्याङ्गगुणविरोधन्यायेन दौर्बल्यात्तदैवोपभृद्द्वयं सम्पाद्य शुद्धं दधि संस्कृतञ्च चतुर्गृहीतद्वयं ग्राह्यम्॥ ५॥ २॥ ८॥

प्रकृतेः ॥ अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेदिति नक्षत्रेष्टिं विधाय श्रोऽत्र जुहोतीत्युपहोमाविहिताः । प्रकृतौ च प्रधानस्विष्टकृतोर्मध्ये वाचनिकानारिष्ठहोमाः* समाम्नाताः । तद्-त्रोपहोमानां नारिष्ठेभ्यः पूर्वमनुष्ठानम् । औपदेशिकप्रधानपाठ-क्रमेण प्रधानानन्तर्यस्य विहितत्वात् । उपहोमानामौपदेशिकत्वेन नारिष्ठेभ्यः प्रथममन्वितत्वाच्चेति प्राप्ते ।

उपकारसाकाङ्क्षया विकृतिभावनया कृप्तोपकाराणामातिदेशि-कानामङ्गानां प्रथमं गृहीतत्वेनोपहोमानामन्यतराकाङ्क्षया पश्चादन्व-यादतिदेशस्य च प्रधानवाक्यशेषत्वस्यैव लाघवादभ्युपगमेनोपहोमा-नामातिदेशिकाङ्गयुक्तप्रधानोत्तरमेव पाठेन क्रमावगतेः पश्चादेव करणम् । तत्रापि ब्राह्मणतर्पणान्ते कर्त्तव्यत्वे प्राप्ते मध्ये जुहोतीति वचनेनोपहोमसमाख्यया चात्रेति स्थाननिर्देशाच्च नारिष्ठेभ्योऽनन्तरं कार्याः ॥ ५ ॥ २ ॥ ९ ॥

कृतदेशात्तु ॥ राजसूये अभिषेचनीयसोमयागानन्तरं वाग्द-शपेयादिदेवनादयोभिषेकान्ता राजसूयधर्मा अक्षैर्दीव्यति राजा-नञ्जिनाति शौनःशेपमाख्यापयति अभिषिञ्चत इत्यादिभिर्विहिताः । तत्राभिषेकस्तावद्वचनादेव माहेन्द्रस्य स्तोत्रं प्रत्यभिषिञ्चत इत्यभि-षेचनीयमाहेन्द्रकालेऽपकृष्टः । तदपकर्षेऽपि च न तत्पूर्व्वपठिताना-मपि विदेवनादीनामपकर्षः । वेदिकरणन्यायेनापूर्व्वाणामेषां बहु-

---

* भाष्ये जैमिनीयन्यायमालाविस्तरे च नारिष्ठहोमाः इति पाठः । दश ते तनवो यज्ञयज्ञिया इत्यादिमन्त्रैराम्नाता आज्याहुतयो-नारिष्ठहोमा इति माधवाचार्य्याः ।

क्रमत्वाभावात्। अभिषेचनीयोत्तरमपि पाठस्य सत्त्वेन पूर्व्ववत् प्राकृताङ्गोत्तरमेव करणमिति प्राप्ते।

पूर्व्वं प्रयाजादिवद्बद्धक्रमत्वाक्लृप्तावपि इदानीमेव प्रत्यक्षेण पाठेन एकराजसूयप्रयोगविधिपरिगृहीतानां विदेवनाद्यभिषेकान्तानां बद्धक्रमत्वोपपत्तौ अभिषेचनीयपाठेन प्राकृताङ्गानामानुमानिकत्वेन तैः सह विदेवनादीनां भिन्नप्रयोगविधिपरिगृहीतानां क्रमकल्पनानुपपत्तेरभिषेकापकर्षेणापकर्ष एव विदेवनादीनाम् ॥ ५ ॥ २ ॥ १० ॥

प्राकृताच्च ॥ दीक्षणीया ज्योतिष्टोमप्रकरणे समाम्नाता, चयनञ्चारभ्याधीतं, वैकल्पिकं सोमयागाङ्गम्। तत्प्रकरणे च सावित्रहोमाख्यासम्भरणादयश्चयनाङ्गभूताधर्माः श्रुताः। पश्चाच्च सचयनज्योतिष्टोमाङ्गदीक्षणीयाप्रयोगोद्देशेन केचिद्गुणाः श्रुताः। तदत्र दीक्षणीयायाः सामान्यतः सोमप्रकरणाम्नातदीक्षणीयाऽपूर्व्वपदार्थैः सह पाठेन बद्धक्रमत्वावगमाच्चयनप्रकरणे दीक्षणीयाया गुणमात्रश्रवणेन पाठाभावाच्च सावित्रादीनामागन्तुकानां दीक्षणीयादिनकृत्यान्ते निवेश इति प्राप्ते।

गुणेनापि गुणिन उपस्थितेस्तद्वाक्ये गुणिन उद्देश्यतया सङ्कीर्त्तनाच्च गुणगुणिनोरेकस्थानावगतेः प्रत्यक्षेण विशेषरूपेण च पाठेन सामान्यरूपस्य पाठस्य बाधात् पूर्व्वं सावित्रादयः पश्चाद्दीक्षणीयेति सिद्धम् ॥ ५ ॥ २ ॥ ११ ॥

सन्निपातः ॥ चयनप्रकरण एव तत्रैव दीक्षणीयागुणश्रवणानन्तरं रुक्मप्रतिमोचनादि चयनाङ्गं श्रुतम्। ज्योतिष्टोमप्रकरणे च सामान्यतो दीक्षणीयोत्तरं दीक्षितसंस्कारादण्डदानादयः। तदत्रापि

विशेषपाठेन सामान्यपाठस्य बाधाद्दीक्षणीयोत्तरं दृक्षप्रतिमोच-नादि कृत्वा दीक्षितसंस्कारा इति प्राप्ते ।

विशेषपाठस्य पश्चाद्भावमात्रबोधनेनान्यथासिद्धस्यावर्जनीयतया-ऽप्युपपत्तौ दीक्षणीयानन्तर्यानियामकत्वात्सामान्यपाठेन क्लृप्तक्रमान् दीक्षितसंस्कारानेव दीक्षणीयानन्तरं कृत्वा तद्दिनकृत्यान्ते दृक्ष-प्रतिमोचनादि कार्य्यम् ॥ ५ ॥ २ ॥ १२ ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
पञ्चमस्य द्वितीयः पादः ।

---

## अथ पञ्चमोऽध्यायः।

### तृतीयः पादः।



विवृद्धिः॥ विकृतावेकादश प्रयाजान्यजति षडुपसद इत्यादिवैकृती अनेकव्यक्तिवृत्त्यधिकसंख्या श्रुता। सा प्रतिप्रधानं गुणावृत्तिन्यायेन पृषदाज्यादिवदेकैकस्मिन् प्रयाजादौ प्रत्येकमभिसम्बध्यत इति एकैक एकादशवारमावर्त्तनीय इति प्राप्ते।

द्वित्वादिसंख्यायाः पृथक्त्वनिवेशित्वादेकैकस्मिन् पञ्चस्वपि वा पृषदाज्यवदावृत्तिं विना एकादशत्वानुपपत्तेरुत्पन्नवाक्यगतत्वेन च कर्मभेदकत्वायोगादावश्यके जघन्ये प्रयाजपदे प्रयोगलक्षणया संख्याविधौ वरं संहितैरेव प्रयाजैस्तल्लक्षणात्संहितप्रयाजप्रयोगाणां संहितानामेवोद्देशात्सर्वसंपाद्या संख्येति प्राञ्चः।

वस्तुतस्तु प्रयोगो नाम न पदार्थान्तरं येन लक्षणा स्यात्, अपि तु प्रयाजानामेव व्यक्त्यन्तरम्। अतश्च यथैव प्रकृतौ पञ्च प्रयाजा इत्यादौ तत्तद्व्याप्यजात्यवच्छिन्ना एव व्यक्तयः प्रयाजत्वरूपव्यापकजात्यवच्छेदेनोच्यन्ते। तथाऽत्रापि एकादशत्वसंख्यासम्पत्त्यर्थं तावद्व्यक्तीनामुक्तौ क्व लक्षणा। अतस्तदभावेऽपि व्यापकधर्मावच्छिन्नोद्देशेन विहितैकादशत्वादिसंख्या अनेकत्र व्यासज्यवृत्तित्वस्वाभाव्या व्यक्त्यन्तराण्याक्षिपन्ती लाघवात् प्रकृतिकॢप्तव्यक्त्यधिकव्यक्तीः षडेवाक्षिपति नाधिका इति सर्वसम्पाद्यसिद्धिः। न चैवं प्रयोगलक्षणाभावे तिस्र आहुतीरित्यादावपि व्यक्तिभेदापत्तिः। तत्र

विधेयतावच्छेदकविजातीयहोमत्वस्यैकस्य पूर्वमनुगतत्वेन भेदप्रतियोगितावच्छेदकतया त्रयाणामेव तेषां कल्पनयोपपत्तौ तत्तद्व्यक्तित्वस्य प्रतियोगितावच्छेदकीभूतस्य विधेयतावच्छेदकत्वकल्पने गौरवात् । प्रकृते तु क्लृप्तप्रयाजत्वस्योद्देश्यतावच्छेदकत्वात् संख्यायास्य विधेयत्वान्न काचित्कल्पनेति विषमम् ॥ ५ ॥ २ ॥ १ ॥

स्थानात्तु ॥ तत्र प्रयाजैकादशत्वादिसंख्या स्वसम्पत्त्यर्थं व्यक्त्यन्तराण्याक्षिपन्ती चतुर्थोत्तमप्रयाजजातीयान्येवाक्षिपति । तदङ्गभूतयोः प्राकृततदङ्गदेवताप्रकाशकयोरपूर्वयोः प्रैषयोर्मध्ये षण्णामन्येषामप्राकृतदेवत्यमन्त्राणां पश्चावाम्नानात् । तद्यद्याद्यानां त्रयाणामभ्यासः स्यात्तर्हि मन्त्राणामपकर्षापत्तिः । समिद्यागत्वस्यानुपस्थितेश्च । अतः सन्निधानाविशेषाच्चतुर्थोत्तमप्रयाजयोरेव चतुश्चतुर्वारं आवृत्तिः । उभयत्राभ्यासत्रये च प्राकृतदेवताबाधो लक्षणया वा तद्देवताप्रकाशनमित्यन्यदेतत् ।

एवमनूयाजेष्वपि मन्त्रलिङ्गवशादेव प्रथमानुयाजस्याद्यास्त्वारो दशमस्य द्वितीयस्याष्टमपर्यन्तं पञ्चमप्रभृत्यभ्यासः नवमैकादशौ तृतीयस्येति । यत्र तु न किञ्चिद्गमकं, तत्र विषमसम्पाद्यसंख्याकस्थले अवश्यकल्प्याया अधिकार्या आवृत्तेरन्तिमविषयत्वात् सर्वस्याप्यन्तिमविषयकत्वमेवेत्यपि वक्ष्यते ।

यत्र तु समसंख्याकैवावृत्तिर्यथा तिसृषूपसत्सु षट्त्वश्रवणे, तत्रैकैकस्य द्विरावृत्त्याऽपि षट्त्वसम्पत्तौ नान्तिमाया एव चतुरावृत्तिः । समुदाये विहितकार्य्यान्यथानुपपत्त्या कल्प्यमानाया आवृत्तेः सर्वविषयत्वौचित्यात् । तत्र च त्रिरनूवाकः पठ्यतामित्यादौ सम्पूर्णानु-

वाकत्वादावृत्तिदर्शनेन प्रकृतेऽप्युपसन्नयनमेकवारं कृत्वा पुनः कार्यमिति दृष्टकल्पितवदावृत्तिरिति प्राप्ते ।

प्रथमद्वितीययोर्हि तृतीयातः पूर्वं करणं क्लृप्तं, तद्दृष्टकल्पितवदावृत्तौ बाध्येत । अतः प्रथमां द्विःकृत्वा द्वितीयाञ्च द्विरभ्यस्य तृतीयाऽपि तथैव कार्येति स्वस्थानविवृद्धिरेवेति सिद्धम् ॥५॥२॥२॥

समिध्यमानवतीम् ॥ पञ्चदशसामिधेनीनां यत्रैकविंशतिरनुब्रूयादित्यत्राधिका संख्या श्रुता, तत्रागमेन संख्यापूरणं दशमे वक्ष्यते । तदत्रागम्यमानानां ऋचां, यद्यपि न्यायेनान्ते निवेशः प्रवक्ष्यते, तथापीयं वै समिध्यमानवती असौ समिद्धवती यदन्तरा तद्धाय्या इति द्यावापृथिव्यन्तरालत्वेन स्तुतस्य समिध्यमानवतीसमिद्धवत्यन्तरालस्याप्राप्तिबलकल्पितविधिविहितस्य सत्त्वात्तदन्तराल एव सर्वासामागम्यमानानां निवेशः । न च धाय्यापदपरिभाषितानामेव मन्त्रविशेषाणामन्तरालनिवेशोऽन्येषां त्वन्त इति वाच्यम् । धीयमानत्वयोगेन सर्वेषामेव धाय्यापदवाच्यत्वादिति प्राप्ते ।

नायं यौगिकः, स्तोत्रादावागम्यमानास्वपि धाय्याशब्दप्रयोगापत्तेः । पाणिनिना सामिधेनीष्वेव धाय्याशब्दस्यानुशिष्टत्वाच्च । अतो रूढ एवायम् । सोऽपि यत्रैव वेदे पृथुपाजवत्यौ धाय्ये इत्यादिना परिभाषितस्तत्रैव । तेषामेव चान्तराले निवेशः, अन्येषां त्वन्त इति । अत एव चैधातव्यायामधाय्याशब्दकाया अग्ने वीत इत्यस्या-स्त्रिष्टुभा परिदधातीत्यन्तनिवेशदर्शनमुपपद्यते ॥५॥२॥३॥

स्तोम ॥ प्रकृतौ बहिष्पवमाने नवस्तृचाः स्तोत्रीयोऽनुरूपः पर्यासश्चेत्येवंसंज्ञाः । विवृद्धस्तोमकायाञ्च विकृतौ बहिष्पवमाने

स्तागमो वक्ष्यते। तत्रागम्यमानानामृचां प्राक् पर्यासात् निवेशः। पर्यासशब्दस्य नदीपर्यासः क्षेत्रपर्यास इत्यादावन्तवचनत्वेन प्रसिद्धेः समाख्ययैवान्तिमस्थानत्वावगतेस्तद्बाधार्थं प्राक् पर्यासादागन्तूनां निवेशकल्पना। अत एव द्वादशाहे पार्ष्ठिके द्वितीयेऽहनि पञ्चदशस्तोमके स्तोत्रीयानुरूपौ पठित्वा 'वृषण्वन्तौ तृचौ समाम्नाय पश्चात्पर्यासः पठित इति प्राप्ते।

प्रकृतिकॢप्तस्थानुरूपानन्तर्यस्य पर्यासे बाधे प्रमाणाभावात् समाख्यायाश्च प्रकृतौ पाठप्राप्तान्तिमस्थानत्वानुवादकत्वेन स्थानविधिकल्पकत्वाभावादन्त एवागन्तूनां निवेशः। द्वादशाहे पार्ष्ठिके द्वितीयेऽहनि तु वाचनिकं वृषण्वतोस्तृचयोः प्राक् पर्यासादनुष्ठानं, तदपि तयोरेव। तद्विकारेष्वन्येषामागमस्त्वन्त एव ॥ ५ ॥ ३ ॥ ४ ॥

अन्ते तूत्तरयोः ॥ यत्र तु विवृद्धस्तोमकेष्वेव क्रतुषु उत्तरयोर्माध्यन्दिनार्भवपवमानयोर्वक्ष्यमाणः सामागमस्तत्र स नान्ते। अनारभ्याधीतेन त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्च अत्रावापन्त्यत एवोद्वपन्तीति वचनेनाप्राप्तिबललब्धविधिशक्तिकेन गायत्र्यादिष्वेव सामावापविधानात्। अतो नान्त इति प्रत्युदाहरणमात्रमिदम् ॥ ५ ॥ ३ ॥ ५ ॥

ग्रहेष्टकम् ॥ यानि प्राकरणिकानि ग्रहणान्यैन्द्रवायवादीनि, तानि यथापाठमेव व्यवस्थितानीति न तेषु चिन्ता। यानि त्वनारभ्याधीतानि °तेष्वपि यत्रांशदाभ्यादौ प्राकरणिको विनियोगस्तत्र विनियोगविधिपाठबलादेवानुष्ठानसिद्धेर्न चिन्ताविषयत्वम्। अत एव न तयोरन्ते करणम्। अपि तु प्रातःसवन एव

धारायहेभ्यः पूर्वमेव । यच त्वनारभ्याधीतमेव तेषां यागाङ्गतयाऽपि विनियोजकं वाक्यं, तत्र ग्रहणस्य यागाभ्यासोपकारकस्य साम-र्थ्यादभ्याससमुदायात्मकसवनद्वारकतयैव यागाङ्गत्वाद्द्वारीभूतसवन-भेदेन प्रतिसवनं ग्रहणानुष्ठानं निर्वापाङ्गस्य मन्त्रस्येव मुष्टिरूप-द्वारभेदेन । एवमनारभ्याधीतानां चित्रिणीरुपदधातीत्यादीना-मपि प्रतिचिति भेदेनानुष्ठानम् । चित्रिण्यादीष्टकानां हि अना-रभ्याधीतानामपि उपधानसंज्ञतानामुपयोगापेक्षायां तस्मादग्नि-चित्सर्वमायुरेतीत्याद्यर्थवादवशादग्न्यङ्गत्वप्रतीतावपि अग्निपदाभि-धेयस्थण्डिलारम्भकचितिद्वारकतयैव तदङ्गत्वावगतेः प्रतिचित्या-वृत्तिः । यां काञ्चिदिति वचनन्तु प्राकरणिकेष्टकाभिप्रायमिति प्राप्ते ।

ऐन्द्रवायवादियहणवदेवाभ्याससंपादनद्वारा यागोपकारकत्वस्यैव सिद्धेः सवनारम्भस्यानुषङ्गिकत्वेऽपि द्वारत्वे प्रमाणाभावान्न प्रति-सवनमावृत्तिरपि त्वन्त एवानुष्ठानम् । एवं चित्रिण्यादेरपि न प्रतिचित्यनुष्ठानम् ॥ ५ ॥ ३ ॥ ६ ॥

अन्ते ॥ चित्रिण्यादीनान्तु यां काञ्चन ब्राह्मणवतीमिष्टकामभि-जानीयात्तां मध्यमायां चितावुपदध्यादिति वचनेन मध्यमचिता-वुपधानम् । अत्र ह्यभिपूर्वस्य जानातेः प्रत्यक्षज्ञानवाचित्वाद्वाक्यार्थ-वत्त्वाच्च प्रत्यक्षब्राह्मणविहितेष्टकोद्देशेन मध्यमचितिरूपदेशविधा-नम् । उपधानन्तु प्रकरणप्राप्तमाश्रयः । प्रत्यक्षब्राह्मणवत्त्वञ्च इष्टका-वाचिश्रुतशब्दविनियुक्तमन्त्रोपधेयत्वमित्युक्तमेव भूमाधिकरणे । न च प्रत्यक्षब्राह्मणवत्त्वस्योद्देश्यविशेषणता । तच्छब्देन विशिष्टपरा-

मर्शकेन विशिष्टोद्देशोपपत्तेः। अतो मध्यमचितावेवोपधानम्। न चेदं प्राकरणिकविषयम्। अविशेषात् ॥ ५ ॥ २ ॥ ७ ॥

प्राक् लोकंपृणायाः ॥ मध्यमायामपि प्राकरणिकेष्टकोपधाना- नन्तरमेवोपधानं चित्रिण्यादीनाम्। न तु प्राक् लोकंपृणायाः। आगन्तुकत्वात्। न च यदेवास्योनं यच्छिद्रं तदेतया पूरयति लोकं पृण छिद्रं पृणेति वचनेन लोकंपृणायाः पूरणार्थत्वात्तस्यान्ते निवेशावगतेः तत: प्राङ्निवेशश्चित्रिण्यादीनाम्। लिङ्गादेव मन्त्रस्य छिद्रपूरणार्थत्वे अस्य वचनस्य तदर्थताविधायकत्वाभावात्। कथञ्चिन्मन्त्रस्य तद्विधायकत्वेऽपीष्टकायास्तदर्थत्वे प्रमाणाभावाच्च।

अस्तु वा मन्त्रे छिद्रपूरकत्वस्येष्टकायास्तत्पूरकत्वं विनाऽनुपपत्ते- स्तस्या अपि तत्। तथापि तस्य चित्यन्तरे सावकाशत्वाच्च चित्रि- ण्यादीनामन्ते निवेशन्यायस्य निरवकाशस्य बाधः। न च लोकं- पृणाया अपि प्रत्यक्षब्राह्मणवत्त्वात् मध्यमचितिमात्रविषयत्वम्। इति करणविनियुक्तत्वेनास्य मन्त्रस्येष्टकावाचिश्रुतपदविनियुक्तत्वा- भावात्। न च तथापि तत्तच्चित्यवान्तरप्रकरणपठितत्वेन तत्रैव निवेशापत्तेश्चयनमहाप्रकरणपठितत्वे चाग्निमचितावेव निवेशापत्तेः कथं सावकाशत्वमिति वाच्यम्। पूरणार्थत्वलिङ्गादेव द्वारभेदेन भेदोपपत्तेः सर्वविषयत्वादिति प्राप्ते।

चित्रिण्यादीनामन्ते निवेशे लोकंपृणायां छिद्रपूरणरूपफलस्यैव बाधापत्तेर्वरं पूर्वपठितेष्टकोपधानोत्तरत्वरूपक्रमबाधेन चित्रिण्या- दीनां प्राक् लोकंपृणाया अभिनिवेशः ॥ ५ ॥ २ ॥ ८ ॥

संस्कृते ॥ आधानस्य नैरपेक्ष्येणोत्पत्तिवाक्येऽग्निनिष्पादकत्वाव-

गमादाधानमात्रेणैवाग्निनिष्पत्तिरिति सिद्धत्वादग्नीनामाधानमात्रा-
नन्तरमेवोत्तरक्रतूनां प्रवृत्तिः। पवमानेष्टयस्तु यदि भाष्यकार-
मतादग्न्यङ्गं, तदा स समिद्धेष्वेवाग्निषु स्वोत्तरभाविक्रतूपयोगितया
संमार्गवत्संस्कारविशेषाधायकाः। यदि तु वार्त्तिककारमतादाधा-
नाङ्गं, तदा बृहस्पतिसववद्दैवता अग्नीनां स्वापका इति न
केषाञ्चित्क्रतूनामाधानानन्तरमेव करणेऽपि पवमानेष्टीनां वैयर्थ्या-
पत्तिः। अग्निं वै सृष्टमग्निहोत्रेणानुद्रवतीति पवमानेष्टिभ्यः
प्रागेवाग्निहोत्रप्रवृत्तिं दर्शयति। अतस्त्वाहिताग्निर्न क्लिन्नन्दार्वभ्या-
दध्यादित्याद्याहिताग्निव्रतवदेवाधानोत्तरमेव क्रतुप्रवृत्तिरिति प्राप्ते।

भाष्यकारमते तावत्तत्तद्वाक्ये नैरपेक्ष्यश्रवणेऽपि एकस्योत्पाद-
कत्वमितरस्य संस्कारकत्वमित्यत्र प्रमाणाभावः। प्रत्युत पवमानेष्टी-
नामेव स्वविनियोजकवाक्ये आहवनीयोत्पादकत्वावगतेराधानस्य
गुणवाक्यावगताहवनीयोत्पादकत्वं विलम्बोपस्थितिकम्। न चैव-
मस्तूभयोरुत्पादकयोर्विकल्पः। सर्वो निर्वपेद्वादशरात्रिषु निर्वपे-
दित्यादिकालविधिवशादेव समुच्चयसिद्धेः। वार्त्तिककारमते त्वाङ्ग-
त्वेवाधानस्याग्न्युत्पादकत्वान्न तदभावेऽग्निसिद्धिः। न च स्वापकत्वं
बृहस्पतिसववत्। पवमानेष्टीनामाधानप्रयोगवहिर्भावेऽपि तद्व-
दन्याधानकरणभावनावहिर्भावस्याश्रुतत्वेन स्वापकत्वकल्पनानुपपत्तेः।
अतः पवमानेष्टिव्यतिरेकेणाहवनीयनिष्पत्तेरभावात्तदुत्तरमेवाग्नि-
होत्रादीनि। आहिताग्निव्रतेषु तु आधानोत्तरमेव पुरुषस्याहि-
ताग्निपदवाच्यत्वोपपत्तेस्तदनन्तरं करणम्।

यत्तु निदर्शनमुक्तं, तत्तूष्णीं होमस्याधानाङ्गभूतस्य स्तुत्यर्थं

नाग्निहोत्रस्य पूर्वप्रवृत्तिसूचकम्। तूष्णीं होमो हि नाग्निहोत्र-होमः। प्रमाणाभावात्। नाप्यग्निहोत्रधर्मकः। अर्थवादगतस्य नाम्नोऽनतिदेशकत्वात्। एतद्धोमस्याप्याधानद्वाराऽग्निप्रयोजकस्याग्नि-सम्बन्धित्वाविशेषात्प्रायणीयादिपदवदनतिदेशकत्वाच्च। अतोऽपूर्वस्यैव होमस्यैवं स्तुतिरिति नाग्निहोत्रस्य पूर्वप्रवृत्तौ लिङ्गम्। भिन्न-प्रयोगपरिगृहीतानामपि च पौर्वापर्यमात्रं प्रसङ्गान्निरूपितम्। व्यवहिताव्यवहितसाधारणेन पौर्वापर्यमेवाध्यायार्थ इत्यपि ध्येयम् ॥ ५ ॥ २ ॥ ९ ॥

सञ्चिते ॥ वर्षति न धावेदित्यादीन्यग्निचिद्व्रतान्यामरणं वर्षमात्रं, वा चयने निमित्ते पुरुषार्थतया, आधाने निमित्ते आहिताग्निव्रतवदेव विहितानि। अत्र व्रतपदश्रवणादेवोभयथापि संकल्प*लक्षणा। पुरुषार्थत्वञ्च वाचनिकफलश्रवणाद्द्रष्टव्यम्। तदिद-मग्निचिद्व्रतं भूतचयनमात्रस्यैव भूताधानवन्निमित्तत्वाच्चयनमात्रे कृते कर्त्तव्यमाहिताग्निव्रतवदिति प्राप्ते।

कर्मणि, भूत इति चानुवर्त्तमानेऽग्नौ चेरिति सूत्रेण कर्त्तरि-चिनोतेः क्विप्प्रत्ययविधानात्कर्मत्वाद्यन्यथानुपपत्त्या च भावनाक्षेपा-दग्निकर्मकचयनकरणकभावनायां एव भूताया निमित्तत्वावगतेरग्नि-शब्दवाच्यस्य च ज्वलनाख्यस्याग्नेः स्वरूपेण चयनकर्मत्वाभावाच्चयन-निष्पादितस्थण्डिलाधारत्वद्वारा कर्मत्वावगतेराधारतायाश्च साङ्ग-यागसमाप्तिं यावदनिष्पत्तेः क्रत्वन्त एवाग्निकर्मकचयनकरणक-

---

* संकल्प,—इत्यशुद्धः पाठ आदर्शपुस्तकेषु।

भावना*भूतत्वावगतेस्तदन्त एवाग्निचित्व्रतानि । आहिताग्निपदे तु यद्यपि क्त-प्रत्ययेन तथैव लक्षणया भावनावगतेस्तस्या एव भूताया-निमित्तत्वावगतिः, तथापि ज्वलनाख्यस्याग्नेराधानकर्मत्वस्य स्वजन्या-वान्तरापूर्वाधारत्वेनैव वाच्यत्वात्तादृशस्य चाधानान्त एव निष्पत्ते-स्तदन्त एवाहिताग्निव्रतानि । न ह्याहवनीयत्वादिना कर्मत्वं श्रुतं, येन पवमानेष्ट्यन्ते तन्निष्पत्तिः शङ्क्येत ॥ ५ । २ ॥ १० ॥

परेण ॥ आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इति दीक्षणीयेष्टेस्तावद्दीक्षार्थत्वं लृट्प्रत्ययस्य क्रियार्थायां क्रियायामुपपदे विहितस्य श्रवणादवगम्यते । दण्डेन दीक्षयति मेखलयादीक्षयति कृष्णविषाणया दीक्षयतीत्यादिना तृतीययैव दण्डादीनां दीक्षार्थ-त्वम् । न च दण्डादीनामभिव्यक्त्यर्थत्वं, दीक्षाभिव्यक्तेरश्रुतत्वात् । अनेकेषु दीक्षयति-पदेषु तल्लक्षणायां प्रमाणाभावाच्च ।

किञ्चादृष्टरूपयमनियमपरिग्रहानुकूलयोग्यतारूपाया दीक्षाया अभिव्यक्तिर्न तावदनुमित्यात्मिका । दण्डादीनां व्यभिचारित्वात् । नापि स्मरणात्मिका । सम्बन्धित्वस्य प्रागज्ञानात् । अस्तु वा दीक्ष-णीयाया एव दीक्षोत्पादकत्वं, तथापि न तदन्ते दीक्षितधर्मा यम-नियमादयः । दीक्षितोऽयं दीक्षितवादं वद सत्यमेव वद नानृत-मित्याद्यावेदनप्रैषेण दण्डादिदानोत्तरमेव यमनियमपरिग्रहविधा-नात् । इतरथा आवेदनस्यादृष्टार्थत्वापत्तेः । अत एव यमनियम-परिग्रह एव दीक्षेति पार्थसारथिलिखनमप्यपास्तम् । आवेदनप्रैषे दीक्षासम्बन्धोत्तरकालं यमनियमपरिग्रहाभिधानात् । स्वयमेव

* इत्यमेव पाठः सर्वत्र । भावनायाः,—इति तु समीचीनं प्रतिभाति ।

दीक्षाया अदृष्टरूपत्वाभिधानाच्च। अतो दण्डादीनामपि दीक्षार्थत्वात्तर्वाऽस्ते सा। न चैवं नैरपेक्ष्यश्रवणादिकल्प्यापत्तिः। अदृष्टार्थतयैकप्रयोगविधिपरिग्रहेण समुच्चयावगतौ अवान्तरकार्ये नैरपेक्ष्योपपत्तेरिति प्राप्ते।

दीक्षणीयावाक्ये दीक्षिष्यमाण इति लृट्प्रत्ययेन तस्या दीक्षार्थत्वं तावदवगन्तव्यम्। दण्डादीनां तु णिजन्त-दीक्षयति-पदश्रवणान्न दीक्षार्थत्वमवगम्यते। अपि तु तदनुकूलव्यापारार्थत्वमेव प्रथममवगम्यते। पश्चात्तु तत्सम्बन्धात्प्रयोज्यव्यापाररूपदीक्षार्थत्वं दण्डेन घटं कारयतीत्यादिवत्कथञ्चित्कल्प्येत। न च श्रौतावगतदीक्षणीययैव कृतार्थत्वाद्दीक्षायाद्दण्डादिजन्यत्वकल्पनाऽवसरः। सिद्धरूपत्वाच्च दण्डादीनां न क्रियाव्याप्तत्वज्ञानमन्तरेण दीक्षार्थत्वसम्भवः।

न च प्रथमावगतप्रयोजकव्यापारार्थत्वमेव वचसैव कारयतीत्यादिवत्तत्रास्त्विति वाच्यम्। तथात्वे साक्षाद्दीक्षणीयार्थत्वाङ्गीकारेऽदृष्टार्थत्वापत्तेः। तद्वरं दीक्षाफलीभूतयमनियमपरिग्रहोपयोगिदीक्षावत्त्वज्ञानजनकतयैव दीक्षणीयार्थत्वम्, दीक्षार्थत्वमेव वाऽङ्गीकर्त्तुमुचितम्। अगम्येति मन्त्रस्य यागफलप्रकाशकतया यागाङ्गत्वमिव। अत एव परम्परासम्बन्धस्य सम्बन्धविधयैव बोधोपपत्तेर्न लक्षणाऽपि। ज्ञानजनकत्वञ्च स्मारकविधया। सम्बन्धस्य च मानान्तरादनवगमेऽपि विध्यन्यथानुपपत्त्यैवावगमात् स्मारकत्वोपपत्तिः। तत्तद्विध्यन्तरैरेव च दण्डादीनां धारणकण्डूयनादिरूपक्रियाविधानान्नाक्रियाविष्टानां स्मारकत्वसम्भव इति शङ्कनीयम्।

अत एव मन्त्रक्रियार्थानामप्येषां दीक्षाऽभिव्यञ्जकत्वमप्यानु-

षङ्गिकम्। अत एव दण्डादीनां दीक्षाऽभिव्यक्तौ समुच्चयः। अत-एवान्त एव दीक्षितधर्मा दीक्षितो न जुहोति न दीक्षितस्याद्य-मश्नीयादित्यादयः। न चैवमावेदनवैयर्थ्यमभिव्यक्तिवैयर्थ्यं चेति वाच्यम्। तद्विध्यानबलेन तत्प्रैषपठितधर्माणामेव तदुत्तरत्व-प्रतीतेः॥ ५॥ ३॥ ११॥

अङ्गवत्॥ काम्यानामुद्भित्सौर्यादीनां नैमित्तिकानाञ्च भेदन-होमादीनां समिदादिवदेव पाठक्रमात्क्रमे प्राप्ते।

उपायप्रवृत्तित्वावच्छिन्नं प्रति फलेच्छायाः कारणत्वान्नैमित्ति-कानुष्ठानस्य च निमित्ताधीनत्वात्तदनुरोधेनैव क्रमावगतेर्न पाठस्य नियामकता। वस्तुतस्तु यत्रैकप्रयोगविधिपरिग्रहोऽनेकेषां, तत्रैव क्रमापेक्षायां पाठादीनां क्रमनियामकता। न तु यत्र भिन्नप्रयोग-विधिपरिग्रहः। अत एव तादृशस्थले पाठः पारायणादावुप-युज्यते॥ ५॥ ३॥ १२॥

स एतेन॥ स्थिते भिन्नप्रयोगविधिपरिगृहीतानां क्रमानियमे क्वचिद्वचनात्पौर्वापर्यम्। यथा एष वाव प्रथमो यज्ञो यज्ञानां य-ज्ज्योतिष्टोमः स एतेनानिष्ट्वाऽथान्येन यजते गर्त्तपत्यमेव तद्भव-तीति। तत्रैतच्छब्दो यद्यपि ज्योतिष्टोममात्रपरामर्शी, तथापि न सर्वसंस्थस्य ग्रहणम्। अपि त्वग्निष्टोमसंस्थस्यैव। संस्थान्तराणामन्य-शब्देनाभिधानस्याग्रिमाधिकरणे वक्ष्यमाणत्वेन, तास्वपि ज्योति-ष्टोमोत्तरत्वस्यावश्यकत्वात्परिशेषादेवाग्निष्टोमसंस्थस्य पूर्वकरणसिद्धेः। अत एवातिरात्रसंस्थाकस्यातिरात्रमेके प्रथममाहरन्तीति वचनादेव प्रथमं करणम्।

अस्तु वाऽग्निष्टोमसंस्थाकज्योतिष्टोमपरामर्शकत्वमेवैतच्छब्दस्य । अग्निष्टोमसंस्थामभिप्रेत्यैव ज्योतिष्टोमे सकलधर्मविधानात् । अत-एव तस्य नवतिशतं स्तोत्रिया इत्युपपद्यते । अग्निष्टोमसंस्थाकज्योति-ष्टोम एव हि तावत्यः स्तोत्रिया न संस्थान्तरयुक्ते । एवञ्चातिरात्र-प्रथमाहारोत्तरमपि[१] अग्निष्टोमसंस्थां कृत्वा एवोद्भिदादयः कार्या इति द्रष्टव्यम् ॥ ५ ॥ ३ ॥ १३ ॥

अथान्येनेति ॥ एतच्छब्दार्थे निरूपितेऽन्यपदार्थो निरूप्यते । अन्यशब्दस्य पूर्वप्रकृतादितरद्यत्सन्निहितं तदाचित्वात्संस्थानाञ्च सन्निहितत्वेन तास्वेवाऽग्निष्टोमोत्तरत्वस्य विधिरिति प्राप्ते ।

न तावत्संस्थानां प्रकरणेन सन्निधानं विकृतित्वात् । अधि-कारोऽपि ज्योतिष्टोमस्यैव । एष वावेत्यादिवाक्यशेषे तस्यैव संकीर्त्त-नाच्च । यज्ञानां ज्योतिष्टोमोद्भिदादीनां मध्येऽग्निष्टोमसंस्थाक एव प्रथममित्युक्तेऽन्येषामप्युद्भिदादीनां यज्ञपदेनोपादानाच्च ।

न चैवं संस्थानामयज्ञत्वादग्रहणम् । तासामप्याश्रयस्य यज्ञत्वात् । अतश्चाग्निष्टोमसंस्थाकज्योतिष्टोमान्य-तद्विकारमात्रे तदुत्तरकालत्व-विधिः । न च ज्योतिष्टोमे यज्ञान्तरापेक्षया प्राथम्यमेव प्रकरणा-नुग्रहाय विधीयतामिति वाच्यम् । एष वावेत्यस्यार्थवादत्वेना-विधायकत्वात् । अथान्येनेत्यनेन हृतीयविधिप्रकारलिप्सया यागा न्तरेष्वेवाग्निष्टोमपूर्वकालकत्वस्य तदुत्तरत्वसमनियतस्य विधानसम्भवे प्रकरणबाधस्यादोषत्वाच्च ।

न च प्रकरणान्तरन्यायेनात्र कर्मान्तरत्वशङ्का । एष वावेत्यने-

(१) अतिरात्रस्य प्रथमं य आहार आहरणं ततुत्तरमपीत्यर्थः ।

नार्थवादेनोद्भिदादीनां यज्ञान्तराणां सन्निहितत्वात्। न च तत्रैव कर्मान्तरत्वशङ्का। तस्योत्तरकालत्वाद्विशिष्टप्राथम्यस्तावकत्वेनोपादेयत्वसामानाधिकरण्येन विधेयत्वानाक्षेपकतया कर्मान्तरानापेक्षकत्वात्। अतः सिद्धमग्निष्टोमसंस्थाकज्योतिष्टोमान्यतद्विकारमात्रे तदुत्तरकालत्वविधिरिति ॥ ५ ॥ ३ ॥ १४ ॥

एकस्तोमो वा* ॥ ननु यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति यः पञ्चदशः स तं यः सप्तदशः स तं य एकविंशः स तमिति वाक्यशेषे एकस्तोमकानामेवं संकीर्त्तनात्तेषामेवान्यशब्देन ग्रहणात्तत्रैवोत्तरकालत्वविधिरक्ताधिकरणन्यायेनेति चेन्न। वाक्यशेषस्यान्यथाऽप्युपपत्तेः। यो हि त्रिवृत्स्तोमः प्रकृतावनुष्ठितः चोदकेनान्यं क्रतुमापद्यते प्राप्नोति स स्तोमस्तं यज्ञक्रतुमभ्यस्तत्वाद्दीपयतीति तस्यार्थः। सम्भवति च स्तोमान्तरसत्त्वेऽपि त्रिवृदादेरपि सत्त्वादनेकस्तोमकक्रतुदीपकत्वम्। पुत्रान्तरसत्त्वेऽप्येकस्य गुणवत्त्वविवक्षया पितृदीपकत्ववत्।

वस्तुतस्तु गुणविशेषस्य प्रकृते अविद्यमानत्वात्त्रिणवादिमात्रस्तोमकक्रतौ च त्रिवृदादेरभावेन दीपकत्वानुपपत्तेर्वाक्यशेषस्य क्रतुविशेषोपस्थापकत्वेऽपि विधौ प्रतिप्रधानावृत्तिन्यायेन सर्वार्थत्वप्रतीतेः सन्देहाभावेनाक्ताधिकरणन्यायाभावान्न वाक्यशेषस्य विधिसंकोचकत्वकल्पनाऽवसरः। अतस्त्रिवृदादिग्रहणं ज्योतिष्टोमीयाङ्गमात्रोपलक्षणम्। तदङ्गमात्रस्य तद्विकृतावभ्यस्तत्वेन तद्विकृतिदीपकत्वा-

* एकस्तोमे वा;—इति भाष्यपुस्तके पाठः।

